## "ग्रन्थार्पणम्"



वशंवदा यद्रसनाग्ररङ्गे
मनोहरा नृत्यति देववाणी ।
यदीयवक्त्राद्धटिकान्तराले
नवोद्या श्लोकशती निरेति ॥ १ ॥

पदे च वाक्ये च तथा प्रमाणे-
ऽप्यव्याहता यस्य मतिर्विभाति ।
यस्य प्रयासैरजरामरैषा
प्रयाति भाषा बहुशः प्रचारम् ॥ २ ॥

अपश्चिमः प्रौढविपश्चितां यः
सारस्वताम्भोधितिमिङ्गिलेन्द्रः ।
नागप्पशास्त्रिद्विजपुङ्गवाय
पूज्याय तस्मै कृतिमर्पयामि ॥ ३ ॥

सौ. क्षमा

# FOREWORD

Sanskrit was for centuries not merely the learned tongue, but the language of inter-provincial communication throughout India. It is still the vehicle for oral discussions at centres of learning. A scholar from Mysore converses with his confrere from Benares in Sanskrit. There are still hundreds of thousands of persons engaged in the study of Sanskrit language and literature, and it is far from being a dead language. Even to-day journals and periodicals in Sanskrit are published and have good circulation. Original books are still written in it. Quite an appreciable number of women in the past acquired deep learning and even at the present day we have women scholars whose attainments arouse profound admiration. Pandita Kshamabai is one of them. She is not merely a great scholar of Sanskrit. She has drunk deep at the fountains of European learning; she is a distinguished linguist and has travelled much in the domains of English, French, and Italian literature; she has written extensively and exquisitely in English. It is gratifying that, true to the traditions of her family, she is keeping the torch of Sanskrit learning burning bright. Her earlier work, the *Satyagraha Gita*, was widely welcomed by men of letters. In the present book she has selected as her subject the life and work of Mira.

Mira is one of the most fascinating figures in Indian legend and history. Born in a noble family, married to a noble prince, she was so engrossed in contemplation of the divine cowherd of Mathura,

so rapt in meditation of Girdhara and of Gopal, so lost to all worldly desires, that she became a problem to her family. She used to visit Krishna's shrine at Chitor, at all hours of the day and night, sing songs of devotion, dance in ecstasy, and forget herself and her surroundings and all that pertained to the material universe. She is a unique figure, of imagination, romance and devotion all compact.

It is of this person that Kshamadevi writes, and writes with such charm and insight as to make her live again in these pages. The verses are adorned with numerous figures of speech; everyone of them is characterised by learning and acquaintance with the niceties of rhetoric. She has an admirable command of language and uses several metres with skill. But what impresses one most is the poetic excellence of verses. They have imagination and vivid power of description. There is clear delineation of character. The combination of learning and poetic grace reminds one of Magha.

It is not necessary in these brief lines to do more than draw attention to some of the more attractive lines that will, one trusts, tempt the reader to read the whole book. I have utilised Kshamadevi's own English rendering of the verses :

"वत्से तात परित्यज भ्रममिमं को नु भ्रमस्ते मतो
व्यासङ्गस्तव हेयवस्तुनि कथं हेयं हरेरर्चनम् ।
मूर्तिप्रीतिरनन्तदुःखजननी हर्षप्रदा सा तु मे
हृष्येस्त्वं गृहिणीपदे कथमदः पत्युः प्रसादेन ते ॥
संपाद्यः परमेष केन विधिना बालप्रभुः सेव्यतां
तत्सेवा ननु कीदृशी चर हितं येनाप्यते निर्वृतिः ।

श्रद्धा भक्तिरिति द्वयं ननु पितः सत्साधनं निर्वृते-
स्तस्मिन् प्रेम तनुष्व तात हृदये गाढं तदस्त्येव मे ॥"

("Child!" "Father!" "Give up this delusion". "What do you regard as delusion?" "Your attachment to that which should be shunned". "Is the worship of Krishna to be shunned"? "Attachment to idols brings endless misery". "But it is the source of happiness to me". Seek happiness in the position of the mistress of the household". "How can that be attained?" "By pleasing your husband". "In what manner?" "By serving him". "How?" "Do what is good and that will bring happiness". "Father, are faith and devotion not really the ultimate means of obtaining happiness?" "Yes, cherish them always". "Father, they are already deeply cherished by me".)

"धावल्यं सितनीरजं त्यजति किं पङ्केऽपि नित्यस्थितं
सौभाग्यं विजहाति किं हिमगिरिश्छन्नस्तुषारैरपि ।
कान्तिं मुंचति किन्नु हीरकमणिर्लोष्टैश्च सन्दूषितः
किं चित्रं यदि धर्मतो न चलिता मीरापि तत्तर्जनैः ॥"

(Can the white lily lose its white radiance because it is rooted in mud? Do the Himalayas lose in grandeur because they are covered over with snow? Does a diamond lose its brilliance because it is stained with clod? What wonder, then, if Mira retains her faith despite the threats of her elders?)

"क्वेन्द्रश्रीः क्व पथि श्रमः क्व च सुखं हर्म्ये क्व वार्तिर्वने
मृष्टान्नं क्व सुवर्णपात्रकलितं भैक्ष्यं क्व कन्थार्पितम् ।
क्व प्रासादगृहं सतूलशयनं शय्याश्मसु क्वाध्वनो
नूनं निश्चितचेतसां तृणसमः कष्टाचलानां गणः ॥"

(Contrast royal splendour and the fatigue of the road,

the comforts of a palace and the hardships of the forest; dainty morsels in plates of gold and the alms dropped in a begging bowl, a feather bed and the roadside stones. But to a person of determination mountains of hardship are mere straws).

These verses show the grace of style, the elegance of expression, the command over metrical form, the vividness of imagination, the sympathetic understanding of Mira's character which are the distinguishing features of this truly remarkable book.

Allahabad
*April 3, 1944*

AMARANATHA JHA.

# मीरालहरी ।



## पूर्वखण्डः ।

यस्याः सौधसुवर्णगोपुरमणिर्धम्मिल्लचूडामणिः
सामोदामलपुष्पकीर्णसुपथाः सौभाग्यमुक्तास्रजः ।
कासारोऽब्जपरागवारिविमलः सच्चित्रहेमांशुकं
सा कुर्खीति पुरा बभूव नगरी लावण्यभूर्मालवे ॥ १ ॥

**यस्या इति** । मालवे देशे कुर्खीति प्रसिद्धा नगरी पुरासीत् । सा च लावण्यस्य भूमिः । तस्याः सौधस्य प्रासादस्य सुवर्णगोपुरं सुवर्णं काञ्चनमयं शोभनवर्णं वा गोपुरं शिखरं तदग्रे निबद्धो मणिस्तस्या नगरीरूपाङ्गनाया धम्मिल्ले संयतकेशवृन्दे विन्यस्तश्चूडामणिरिव शोभते । यस्या नगर्याः सामोदैः प्रभूतपरिमलैरमलैः शुक्लैः पुष्पैः कीर्णाः सुपथा राजमार्गा एव सौभाग्यशंसिनो मुक्ताहाराः । यस्या अब्जानां परागेण युक्तेन वारिणा विमलो यः कासारः स एव सच्छोभनं चित्रं सुवर्णाम्बरम् । इह सर्वत्रापि सावयवं रूपकमलङ्कारः । नगर्यां स्त्रीत्वेन वर्णितायामपि तदुपमानभूतस्त्रीपदस्यानभिधानादेकदेशविवर्तिभेदः ॥ १ ॥

निःशेषैः शुभलक्षणैः श्रितवपुः सुक्षत्रियेन्द्रोद्भवा
बाल्यादेव निदर्शिताद्भुतरसा श्रीकृष्णनामामृते ।
मीराख्या निजजन्मना पुरमिदं चक्रे परं पावनम्
शैलेन्द्रं गिरिजेव मैथिलकुलं सीतेव पूतात्मना ॥ २ ॥

**निःशेषैरिति** । निशेषैः सकलैः शुभलक्षणैर्हस्तपादरेखादिभिः सुचिह्नैः श्रितवपुः समुपेतशरीरा सुक्षत्रियेन्द्रोद्भवा प्रसिद्धक्षत्रियस्य कन्या श्रीकृष्णस्य नामामृते बाल्यात्प्रभृत्येव निदर्शितः व्यञ्जितोऽद्भुतो विस्मयकरो रसः प्रीतिर्यया सा मीराख्या मीरानाम्नी निजजन्मना पुरमिदं पावनं चक्रे पवित्रीकृतवती । गिरिजेव, यथा गिरिजा पार्वती पूतेन पवित्रेणात्मना शैलेन्द्रं हिमालयं पावनं चकार । सीतेव, यथा सीता मैथिलस्य मिथिलानृपतेः जनकस्य कुलं वंशं पूतात्मना पावनं चकार इत्युपमालङ्कारः । तेन च मीरायाः पातिव्रत्यादिगुणसंपत्तिरूपं वस्तु व्यज्यते ॥ २ ॥

बालेन्दुः किमयं विभाति न दिवा तत्कान्तिरेतादृशी
किं वा कैरविणी परं निशि हि सा जागर्ति संहासिनी ।
मूर्तिः किं कनकद्रवोपखचिता तस्याः कुतो विभ्रमा
इत्येनामवलोक्य कौतुकवशश्चक्रे विकल्पाङ्गनः ॥ ३ ॥

**बालेन्दुरिति** । एनां मीरामालोक्य जनो लोकः कौतुकवशः कुतूहलाविष्टो विकल्पान् वितर्कांश्चक्रे । तद्यथा—अयं बालेन्दुः किं स्यादिति विकल्पः । तत्कान्तिर्बालेन्दोः कान्तिर्दिवा दिवसे एतादृशी न विभाति, तस्मादयं बालेन्दुर्नेति निश्चयः । अथ द्वितीयो विकल्पः—इयं कैरविणी श्वेतोत्पललता किं स्यादिति । सा तु निशि परं रजन्यामेव हि यस्मात्संहासिनी विकासशालिनी जागर्ति शोभते । तस्मात्कैरविणी नेति निश्चयः । अथ तृतीयो विकल्पः—इयं कनकद्रवेण सुवर्णरसेन खचिता उपलिप्ता मूर्तिः किं स्यादिति । तस्या अचेतनाया मूर्तेर्विभ्रमाश्चेतनसहजा विलासाः कुतः । न संभाव्यन्ते इत्यर्थः । अत एवेयं कनकमूर्तिर्नेति निश्चयः । संशयस्तावदनिरस्त एव तिष्ठतीति निश्चयगर्भोऽयं ससंदेहालङ्कारस्तेन च मीराया निरुपमा सौन्दर्यसम्पत्तिर्व्यज्यते ॥ ३ ॥

**तत्र क्षत्रियनीतिधर्मपरमः पुत्रानिव स्वप्रजाः**
**शिक्षापोषणरक्षणैरविरतं वात्सल्यतः पालयन् ।**
**कन्यारत्नविशेषितात्ममहिमा श्रीरत्नसिंहाह्वयो**
**मीराया जनको व्यराजत पुरे रत्नाकरः सम्पदाम् ॥ ४ ॥**

**तत्रेति** । तत्र पुरे श्रीरत्नसिंहनामा मीराया जनकः व्यराजत । उत्कर्षेणावर्ततेत्यर्थः । स कीदृशः—क्षत्रियाणामुचितो नीतिधर्म एव परमं यस्य सः । शिक्षया विद्याभ्यासोपायकल्पनैः पोषणेन गृहक्षेत्रादिवृत्तिप्रदानेन रक्षणेन भयात् परिपालनेन च स्वप्रजा वात्सल्यतः प्रीत्या अविरतं निरन्तरं पालयन् । पुनः कीदृशः—कन्यारत्नेन श्रेष्ठगुणवत्या दुहित्रा मीरया विशेषितोऽधिकीकृतः आत्मनो महिमा महत्त्वं येन सः । पुनश्च सम्पदां रत्नाकरः सागर इति रूपकेण सर्वसम्पत्समृद्ध इत्यर्थः । कन्यारत्नविशेषितात्ममहिमेत्यनेन वस्तुना पितुरप्यधिकगुणा कन्येति वस्तु व्यज्यते ॥ ४ ॥

**भाविप्रौढिमचिह्नमुद्रितमुखी पञ्चाब्दकल्पैकदा**
**बालालोकत बालमित्रसहिता प्रासादवातायनात् ।**
**यात्रां मङ्गलवाद्यमञ्जुलरवां हस्तप्रदीपोज्ज्वलां**
**रात्रौ राजपथे सुवर्णशिबिकामावार्य मन्दं यतीम् ॥ ५ ॥**

**भावीति** । एकदा रात्रौ बाला यात्रामालोकतेति वाक्यार्थः । कीदृशी बाला । भाविप्रौढिमचिह्नमुद्रितमुखी भाविनः उत्तरस्मिन् काले व्यक्तिमाप्स्यतः प्रौढिम्नः महत्त्वस्य चिह्नैः लक्षणैः मुद्रितम् अङ्कितम् मुखं यस्याः सा । पञ्चाब्दकल्पा पञ्चवर्षदेशीया बालमित्रसहिता च । क्व स्थिता आलोकत—प्रासादवातायनात् राजगृहगवाक्षात् । कीदृशीं यात्राम्—मङ्गलवाद्यमञ्जुलरवां मङ्गलवाद्यैर्मञ्जुलो मनोहरो रवः ध्वनिः यस्यां सा ।

हस्तप्रदीपोज्वलां करधृतैः प्रदीपैः उज्वलां प्रकाशमानां सुवर्णशिबिकां सौवर्णप्रवहणम् आवार्य परिवृत्य राजपथे राजमार्गे मन्दं यतीं शनैः गच्छन्तीम् ॥ ५ ॥

**तस्मिन्नूतनवधूवरौ प्रवहणे मालाभिरावेष्टितौ**
**नाद्यापि प्रतिपन्नयौवनदशौ दाम्पत्यमूढावुभौ ।**
**वृद्धोक्त्या नमिताननौ जनदृशः संत्रस्नुनेत्राम्बुजा-**
**वास्तां मण्डितपुत्रिकायुगलवन्निःशब्दनिश्चेष्टितौ ॥ ६ ॥**

**तस्मिन्निति** । तस्मिन् प्रवहणे याने नूतनौ वधूवरावास्ताम् । कीदृशौ—मालाभिः पुष्पमयीभिरावेष्टितौ आच्छादितौ । नाद्यापि प्रतिपन्ना प्राप्ता यौवनस्य दशा याभ्यां तौ । दाम्पत्ये जायापत्योः परस्परसंबन्धविषये उभौ मूढौ अनभिज्ञौ । वृद्धानामुक्त्या वृद्धैरुपदिष्टप्रकारेण न तु स्वबोधेन नमिते आनने याभ्यां तौ । जनदृशो लोकदर्शनात् संत्रस्नु भीतभीतं नेत्रं अम्बुजमिव ययोस्तौ । मण्डितयोरलङ्कृतयोः पुत्रिकयोः सालभञ्जिकयोर्युगलवन्मिथुनमिव निःशब्दौ मौनिनौ निश्चेष्टितौ निश्चलौ च ॥ ६ ॥

**तत्पूर्वेक्षितभूरिलोकनिचया विस्मेरचक्षुर्द्वया**
**मीरा प्राह किमेतदम्ब वद मे यात्रास्ति वैवाहिकी ।**
**मातः कुत्र पतिर्ममास्ति ननु ते तिष्ठत्यसौ मन्दिरे**
**पश्येति प्रतिमां विभोर्निरदिशत्कृष्णस्य कोणस्थिताम् ॥ ७ ॥**

**तत्पूर्वेति** । तत्पूर्वं तत्प्रथमतया ईक्षितो भूरिलोकानां अनेकस्त्रीपुरुषाणां निचयः स्तोमः यया सा अत एव विस्मेरं विस्मयाविष्टं चक्षुर्द्वयं यस्याः सा मीरा प्राह बभाषे । अम्ब एतत्किं मे मह्यं वदेति प्रश्नः । वैवाहिकी यात्रा अस्त्येषेत्युत्तरम् । एवमेव प्रश्नोत्तराणां परंपरा द्रष्टव्या । मातः कुत्र मम पतिरस्ति—नन्वसौ ते मन्दिरे क्रीडालये तिष्ठति । पश्येति कोणस्थितां कोणे स्थितां विभोः श्रीकृष्णस्य प्रतिमां मूर्तिं निरदिशत् प्रादर्शयत् कन्यायै मातेत्यर्थः ॥ ७ ॥

**संजातो नु किमम्ब मे परिणयो जातः स वत्से पुरा**
**यात्रासीन्महती मदर्थमपि किं वाद्यादिभिर्वैभवैः ।**
**वृत्तं हन्त महोत्सवेन निखिलं सर्वप्रजानन्दनं**
**किं पत्युः सविधासिताहमथ किं पार्श्वे हि ते स स्थितः ॥ ८ ॥**

**संजात इति** । अम्ब मे परिणयो विवाहः संजातः किं नु—वत्से पुरा प्रागेव स विवाहो जातः संवृत्तः । मदर्थं वाद्यादिभिर्नृत्यगीतवाद्यप्रभृतिभिर्वैभवैर्महती यात्राप्यासीत्किम्—हन्तेति हर्षे बालोक्तिजन्यविनोदनिमित्ते । सर्वप्रजानामानन्दनं यथाभूतस्तथा

निखिलं महोत्सवेन वृत्तम् । अहं पत्युः सविधे पार्श्वे आसिता उपवेशिता किम्—अथ किं स हि पतिः पार्श्वे स्थित एव । अनेन गृहकोणे त्वत्समीपे वर्तते इति श्रीकृष्णमूर्तेः परामर्शोऽपि मात्राभिप्रेतः ॥ ८ ॥

**शुश्रूषा कथमम्ब पत्युरिह मे कार्या सुते श्रद्धया**
**किं तातस्य यथा करोषि विधिना तद्वद्विधेया त्वया ।**
**किं हि स्याद्यदि सेव्यते प्रतिदिनं प्रीतः स ते जायते**
**कान्तं चेन्न जहामि तद्भवति किं न त्वामसौ हास्यति ॥ ९ ॥**

**शुश्रूषेति** । अम्ब इह सांप्रतं पत्युः शुश्रूषा सेवा कथं मे कार्या—सुते श्रद्धया सा कार्येति शेषः । यथा तातस्य मत्पितुर्विधिना नियमेन त्वं करोषि तथा किम्—तद्वत्तथैव त्वया विधेया कर्तव्या शुश्रूषेति शेषः । यदि प्रतिदिनं पतिः सेव्यते तर्हि किं हि स्यात् को लाभो भवेत्—स ते प्रीतः प्रसन्नो जायते भविष्यति । कान्तं वल्लभं न जहामि तत्सन्निधिं न मुञ्चामि चेत्तत्तदा किं भवति—असौ त्वां न हास्यति त्यक्ष्यति ॥ ९ ॥

**सत्कारः कथमज्ञया प्रियपतेः कर्तुं मया शक्यते**
**गानैर्नर्तनकीर्तनैश्च मधुरैः कण्ठोऽम्ब मे कर्कशः ।**
**गान्धर्वं परिशिक्ष्यसे त्वमचिराज्जानामि नाप्यक्षरम्**
**तच्चिन्तां विजहीहि पण्डितवराः शिक्षां विधास्यन्ति ते ॥ १० ॥**

**सत्कार इति** । अज्ञया मया पत्युः सत्कारः शुश्रूषा कथं कर्तुं शक्यते इति प्रश्नः । मधुरैः गानैः नर्तनकीर्तनैश्च सेवा कर्तुं शक्यते इति शेषः । मातुरुत्तरम् । अम्ब मे कण्ठः कर्कशः । गीतकुशला नास्मि, अतः किं कार्यमिति मीराया जिज्ञासा । अचिरात्त्वं गान्धर्वं संगीतकलां परिशिक्ष्यते सम्यक् पाठ्यसे इति मातुः समाधानवाक्यम् । अक्षरमपि न जानामि कथमहं संगीतकलाशिक्षणयोग्या भवेयमिति मीरायाः पुनराक्षेपः । तच्चिन्तां विजहीहि त्यज, यतः पण्डितवरास्ते शिक्षां विधास्यन्ति त्वां कलां शिक्षयिष्यन्ति इत्यर्थः ॥ १० ॥

**श्रुत्वा बालविनोदमात्रलपितं मातुर्गिरां विस्तरं**
**जग्राहाप्तगुरूपदेशमिव सा श्रद्धाय सर्वात्मना ।**
**बाह्यालोकरसान्निवृत्तहृदया केनाप्यनालोकिता**
**व्यग्रे सर्वजने ययौ च निभृतं श्रीकृष्णमूर्त्यन्तिकम् ॥ ११ ॥**

**श्रुत्वेति** । अथ सा मीरा बालायाः विनोदनाय केवलं लपितं भाषितं मातुर्गिरां विस्तरं पूर्वोक्तिवाक्यप्रपञ्चं श्रुत्वा, आप्तं निर्दोषं गुरोरुपदेशमिव सर्वात्मना एकान्ततः

श्रद्धाय विश्वस्य जग्राह अङ्गीचकार । अपि च सा बाह्यस्य प्रासादाद् बहिर्विजृम्भमाणस्य महोत्सवस्य आलोके दर्शने रसाद् अभिलाषात् निवृत्तं परावर्तितं हृदयं मनो यस्याः सा । एवंभूता सती सर्वजने प्रासादे मिलितेषु समस्तलोकेषु व्यग्रे बहिर्व्यापृतचित्ते स्थिते केनाप्यनालोकिता अदृष्टा श्रीकृष्णमूर्तेः कोणस्थितायाः अन्तिकं समीपं निभृतं निःशब्दं ययौ ॥ ११ ॥

**किञ्चित्कालमतीत्य राजरमणी शुद्धान्तयोषिद्वृता**
**सम्प्राप्ता परिवृत्तशीलचरितामुद्दीप्तवक्त्रप्रभाम् ।**
**स्थित्वा श्रीयदुनन्दनस्य पुरतो निर्वर्णयन्तीं चिरं**
**चित्रस्थामिव निश्चलां दुहितरं चित्रीयमाणेक्षते ॥ १२ ॥**

**किञ्चित्कालमिति ।** किञ्चित्कालमतीत्य वरयात्रानिर्गमानन्तरं राजरमणी राज्ञी मीराया माता शुद्धान्तस्य अन्तःपुरस्य योषिद्भिः स्त्रीभिर्वृता युक्ता सम्प्राप्ता मीरा समीपमुपगम्य तां दुहितरं परिवृत्तं अन्यथाभूतं शीलं स्वभावः चरितं आचरणं च यस्यास्ताम् । उद्दीप्ता उज्ज्वला वक्त्रस्य मुखस्य प्रभा यस्याः तां श्रीयदुनन्दनस्य श्रीकृष्णविग्रहस्य पुरतः अग्रे स्थित्वा चिरं निर्वर्णयन्तीमेकभावेन पश्यन्तीं निश्चलाम् अत एव चित्रस्थामिव चित्रार्पितामिव दृश्यमानां चित्रीयमाणा विस्मयान्विता ईक्षते ददर्शेत्यर्थः । अत्र चित्रस्थामिवेत्युत्प्रेक्षा ॥ १२ ॥

अथ क्रीडनप्रकोष्ठं विहाय मीरायां देवसंनिधौ स्थितायां किं वृत्तमित्याह—

**या खेलाभवने स्म खेलति पुरा पुत्रीकृता पुत्रिका**
**सेदानीं रुदतीव दूषितमुखी कोणे क्वचिल्लीयते ।**
**शीघ्रं भोजय मामिति प्रलपति क्षुत्पीडिता सारिका**
**शश्वल्लालितगोगणश्च तनुते हम्बारवं विह्वलः ॥ १३ ॥**

**या खेलेति ।** पुरा खेलाभवने क्रीडनशालायां पुत्रीकृता शिशुवत् प्रेम्णा लालिता या पुत्रिका सालभञ्जिका खेलति स्म क्रीडति स्म मीरया सहेत्यर्थः । इदानीं सा रुदतीव रोदनं कुर्वतीव अत एव दूषितं मुखं यस्याः सा तादृशी क्वचित्कोणे लीयते । निर्व्यापारा वर्तते । अत्र कार्यमुखेन कारणस्य मीराया दूरीभवनस्य गम्यत्वात् पर्यायोक्तमलङ्कारः । किं च सारिका शुकस्त्री क्षुधया पीडिता तद्भोजयित्र्या मीराया असन्निधानादित्यर्थः । मां शीघ्रं भोजयेति प्रलपति वृथा भाषते । वृथात्वं च मीरायास्तद्वचनस्याश्रूयमाणत्वात् । अपि च शश्वन्नित्यं लालितः प्रेम्णोपचरितो गोगणो धेनूनां वृन्दं विह्वलः सन् तत्कालिकविरहक्षणेन व्याकुलीभूत्वा हम्बारवं तनुते । शीघ्रमेहीति वदन्निवेति तात्पर्यम् । अत्र पद्यस्योत्तरार्धगतवाक्यद्वयेऽपि पूर्ववत्पर्यायोक्तमलङ्कारः ॥ १३ ॥

म्लानं तन्मुखतुल्यनीरजमसौ पश्यन्नलिः खिद्यते
तत्संशिक्षितभूरिखेलनशुनीं नष्टां पिकी शोचति ।
तत्कण्ठानुरवां मृगी नवशुकीमप्रेक्ष्य हा दूयते
दूरस्थे निजसंश्रये जनिमतां स्नेहानुबन्धोऽद्भुतः ॥ १४ ॥

**म्लानमिति** । असौ अलिस्तस्याः क्रीडाकमले यः क्रीडति स्म भ्रमरस्तस्या मुखेन तुल्यं नीरजं तत् कमलं म्लानं शुष्कं पश्यन् खिद्यते दुःखयति । अत्र नीरजं तन्मुखतुल्यमिति प्रतीपालङ्कारः । पिकी कोकिला तया मीरया संशिक्षिता नानाविधविनोदक्रियासु सम्यक् शिक्षिता अत एव भूरिखेलनां प्रचुरक्रीडनशीलां शुनीं नष्टां क्रीडागृहादपगतां पश्यन् शोचति । अपि च मृगी हरिणी तस्या मीरायाः कण्ठानुरवां तस्याः कण्ठस्वरमनुकुर्वन् रवो यस्यास्तां नवशुकीं सारिकामप्रेक्ष्य अदृष्ट्वा हा दूयते निरुत्साहा तिष्ठतीति कष्टम् । अत्र वाक्यत्रयेऽपि कार्यमुखेन मीराया असांनिध्यरूपकारणस्याभिधानात्पर्यायोक्तम् । निजसंश्रये आत्मनः संश्रयभूते जने दूरस्थे दूरवर्तिनि सति जनिमतां प्राणिनां स्नेहः प्रीतेः अनुबन्धः अनुवृत्तिः अद्भुतः विस्मयकरो दृश्यते इति शेषः । अत्र च पूर्ववाक्यत्रयगतविशेषस्य सामान्येन समर्थनादर्थान्तरन्यासः, स च प्रतीपपर्यायोक्ताभ्यां संकीर्णः ॥ १४ ॥

अथैकेन श्लोकेन मीराया विद्यासंपत्तिं वर्णयति ।

साहित्यादिकलाविशेषनिपुणैर्विद्वद्वरैः शिक्षिता
विद्यायामतिवर्तते स्म नृपजा गार्ग्यादिसद्योषितः ।
सत्काव्यग्रथने पुरातनकवीन् प्रत्यादिशद्विश्रुतान्
गीतेऽभूत्पटुनर्तने च नचिराद्दिव्याङ्गनाभिः समा ॥ १५ ॥

**साहित्येति** । नृपजा सा राजकन्या साहित्यादौ साहित्यव्याकरणाध्यात्मप्रभृतिशास्त्रेषु कलाविशेषेषु च निपुणैः कुशलैर्विद्वद्वरैः पण्डितोत्तमैः शिक्षिता सती नचिरात् शीघ्रमेव गार्ग्यादीः गार्गीसुलभामैत्रेयीप्रभृतीः सतीः पण्डिताः योषितः विद्यायां सर्वशास्त्रपरिज्ञाने अतिवर्तते स्म अतिशिश्ये । अपि च सतां शोभनानां काव्यानां ग्रथने प्रणयने विश्रुतान् प्रसिद्धान् पुरातनकवीन् प्रत्यादिशत् अधश्चकार । तत्समानकौशला बभूवेत्यर्थः । किं च गीते संगीते पटुनर्तने च विशिष्टनाट्ये दिव्याङ्गनाभिः सुरस्त्रीभिः समाभूत् । अत्र चरमवाक्यत्रयेऽपि असंबन्धे संबन्धाभिधानरूपा अतिशयोक्तिर्द्रष्टव्या ॥ १५ ॥

अथ मीराया दिनचर्यां वर्णयति ।

भोगैश्वर्यवृतापि राजदुहिता भूरिश्रमं सेवते
मार्तण्डोदयतः पुरैव हि लघु प्रोत्थाय निष्क्राम्यति ।
गत्वा निर्जनवापिकामथ शिवं शीतोदकं गाहते
स्नाता च स्वयमेव तीर्थकलशं धृत्वा गृहं गच्छति ॥ १६ ॥

**भोगैश्वर्येति।** राजदुहिता मीरा भोगैश्च ऐश्वर्येण च वृतापि सम्पन्नापि भूरिश्रमं सेवते अतिक्लेशकराणि कार्याणि करोति स्म। हि तद्यथा—मार्तण्डोदयतः सूर्योदयात्पुरैव प्रागेव लघु शीघ्रं प्रोत्थाय शयनं त्यक्त्वा निष्क्राम्यति बहिर्गच्छति स्म। अथानन्तरं शौचादिविधेः पश्चादित्यर्थः, निर्जनां जनरहितां वापिकां गत्वा शिवं निर्मलं शीतोदकं शीतलं जलं गाहते प्रविशति। अवगाह्य स्नानं करोति स्मेत्यर्थः। स्नाता च स्नानानन्तरं तीर्थस्य देवार्चनयोग्यस्य अग्र्योदकस्य कलशं पात्रं स्वयमेव धृत्वा गृहं गच्छति स्म ॥ १६ ॥

**प्रक्षाल्य प्रतिमां स्वमानसपतेर्गोपालचूडामणे-**
**नैपथ्यं तनुते सुगन्धनिचयैरालिप्य यत्नेन सा।**
**सौवर्णाम्बररत्नभूषणसुमस्रग्भिश्च संपूज्य तां**
**श्रीकृष्णप्रभुकीर्तनामृतसरोगर्भान्तरे लीयते ॥ १७ ॥**

**प्रक्षाल्येति।** सा मीरा यत्नेन आदरेण स्वमानसपतेः आत्मनो मनसाङ्गीकृतस्य स्वामिनो गोपालचूडामणेः श्रीकृष्णस्य प्रतिमां मूर्तिं प्रक्षाल्य अभिषिच्य नैपथ्यम् अंगरागवेषभूषाविधिं तनुते रचयति। किं किं कृत्वेत्याह—सुगंधनिचयैः शोभनैः कस्तूरिकाकुङ्कुमचंदनप्रभृतिभिः अष्टाभिर्गन्धैः आलिप्य विलेपनं कृत्वा। अपि च सौवर्णांबरेण पीतांबरेण रत्नैर्वज्रवैदूर्यमाणिक्यादिभिर्भूषणैः रजतकनकमयैरलङ्करणैः सुमस्रग्भिः पुष्पमालाभिश्च तां संपूज्य सम्यक् पूजां कृत्वा। अथ च किं करोतीत्याह—श्रीकृष्णप्रभोः कीर्तनं गुणगानमेव अमृतसरः सर्वेन्द्रियाप्यायनकरत्वात् तस्य सरसः गर्भान्तरे अन्तर्भागे लीयते लीना इव तिष्ठति। अत्र कीर्तनामृतसरः इति रूपकम्। लीयते इति गम्योत्प्रेक्षा, इव इति व्यञ्जकस्य अप्रयोगात्। अनयोः संकरः ॥ १७ ॥

**काले याति बभूव सा भगवतो मूर्तिर्महीन्द्रात्मजा**
**नेत्रासेचनकं तदीयनियमानुष्ठानमप्यद्भुतम्।**
**सा श्रद्धा स च भक्तिभावगरिमा नालोकितः शैशवे**
**केनापीति वदन्नृपालयगतो रोमाञ्चितोऽभूज्जनः ॥ १८ ॥**

**कालेति।** काले याति एवम् अनुष्ठानपराया मीराया गच्छत्सु मासेषु सा भगवतो मूर्तिः महीन्द्रात्मजायाः राजकन्यायाः नेत्रासेचनकं नेत्रयोर्निरवधिकानन्दप्रदा बभूव। "तदासेचनकं तृप्तेर्नास्त्यन्तो यस्य दर्शनादित्यमरः"। अपि च तदीयनियमानुष्ठानमपि स्नानार्चनव्रतोपवासादीनाम् अनुष्ठानं करणम् अपि अद्भुतं विस्मयकरं बभूव। तथा हि सा श्रद्धा लोकोत्तरा शास्त्रगुरुवाक्येषु निश्चिता सत्यत्वबुद्धिः स च भक्तिभावगरिमा भगवति गुरुतरा प्रेमवृत्तिः शैशवे बाल्यावस्थायां न केनापि आलोकितः दृष्टः इति नृपालयगतो राजगृहवर्ती जनः वदन् रोमाञ्चितः हर्षाश्चर्याभ्यां पुलकितोऽभूत्। अत्र

अद्भुतो रसः । अद्भुतकर्मकरी मीरा आलंबनविभावः । अद्भुतकर्माणि श्रद्धाभक्तिपूर्व-नियमानुष्ठानानि उद्दीपनविभावः । प्रेक्षकाणां रोमाञ्चितत्वं अनुभावः । हर्षः संचारी अर्थादाक्षिप्यते ॥ १८ ॥

**दीनां पाहि विभो त्वमेव शरणं नान्यः शरण्योऽस्ति मे**
**प्रार्थ्यैवं विनता प्रजातपुलका प्रोद्वीक्ष्य मूर्तेर्मुखम् ।**
**ईषत्स्मेरमिव स्थितं परवशा बाष्पायमाणेक्षणा**
**ब्रह्मानन्दमहार्णवे क्षणमहो मग्नेव रराजते ॥ १९ ॥**

**दीनां पाहीति** । दीनां पाहि विभो ! त्वमेव मे शरणं अन्यः शरण्यो मे नास्ति, एवं-प्रकारेण प्रार्थ्य प्रार्थनां कृत्वा सा विनता नीचैः प्रणता प्रजातपुलका प्रकर्षेण भक्तिभरेण संजातरोमाञ्चा ईषत्स्मेरमिव किञ्चित्स्मयमानमिव स्थितं मूर्तेर्मुखं प्रोद्वीक्ष्य बद्धदृष्ट्या उच्चैर्दृष्ट्वा परवशा अहो मे भगवान् प्रसन्न इति भावनया विवशा भूत्वा बाष्पायमाणेक्षणा आनन्दाश्रुपूर्णनेत्रा ब्रह्मानन्द एव महान् अर्णवस्तस्मिन् क्षणं मग्नेव रराजते नितरां दीप्यते । ब्रह्मानन्दमहार्णव इति रूपकम् । मग्नेव इत्युत्प्रेक्षा, अपि च देवविषया इति भावः । भगवान् आलंबनविभावः तस्य सर्वशरण्यत्वादिमहिमा उद्दीपनविभावः, मीरायाः प्रजातपुलकत्वं बाष्पायमाणेक्षणत्वं परवशत्वादिकं च अनुभावाः ॥ १९ ॥

**जन्मारभ्य सुखोषिता क्व नृपजा शय्या क्व वा भूतलं**
**क्वाङ्गानां सुकुमारता क्व च तपःक्लेशोऽपि तत्तादृशः ।**
**संस्कारो बलवत्तरः सुकृतिनां जन्मान्तरोपार्जितो**
**येनैकान्तिकभक्तियोगमहिमा शिक्षां विना लभ्यते ॥ २० ॥**

**जन्मारभ्येति** । जन्मारभ्य जन्मप्रभृति सुखेन उषिता जीवन्ती नृपजा राजकुमारी क्व तस्याः शय्या भूतलं, क्व वा क्व खलु । अङ्गानां तदीयगात्राणां सुकुमारता क्लेशनिः-सहं मार्दवं क्व तत्तादृशः लोकोत्तरः तपःक्लेशोऽपि तपसः कठिनशरीराणां योग्यस्य नियमजातस्य क्लेशोऽपि क्व । ईदृशी घटना तादृश्या मीराया नानुरूपेत्यर्थः । इमं विरूपघटनारूपं विशेषं समर्थयितुं सामान्यरूपमर्थान्तरं न्यस्यति । तथा हि जन्मान्तरो-पार्जितः प्राग्जन्मनि संपादितः सुकृतिनां पुण्यशालिनां संस्कारः कर्माशयः बलवत्तरो बलीयान् भवतीति शेषः । येन संस्कारेण ऐकान्तिकयाः नियतायाः भक्तेः योगस्य महत्त्वं शिक्षां विना उपदेशं विना लभ्यते स्वतः प्राप्यते ॥ २० ॥

अथ मीरामीदृशीं पश्यन्तो लोकाः तत्स्वरूपं बहुधा विकल्पयामासुरिति द्वाभ्यां वर्णयति ।

**वात्सल्येन किमागता निजशिशोः साक्षाद्यशोदा स्वयं**
**सम्प्राप्ता किमु रुक्मिणी यदुपतेः सांनिध्यमुत्कण्ठिता ।**

राधा रासविनोदिनी विलसितुं किं प्राप भूयो भुवं
गोपी गोपसुतस्य कापि पुरतो लास्याय किन्नु स्थिता ॥ २१ ॥

**वात्सल्येनेति** । निजशिशोः बालकृष्णस्य वात्सल्येन प्रीत्या साक्षाद् यशोदा तज्जननी स्वयमागता किमु । इयं यशोदा भवेदिति संशयः । अपि च रुक्मिणी उत्कण्ठिता विरहोत्सुका सती यदुपतेर्निजवल्लभस्य श्रीकृष्णस्य सान्निध्यं समीपं संप्राप्ता आगता किमु इति द्वितीयः संशयः । रासविनोदिनी रासक्रीडाविनोदशीला राधा स्वपतिना कृष्णेन विलसितुं क्रीडितुं भूयः पुनः भुवं प्राप भूलोकम् आगता किमिति तृतीयः संशयः । कापि गोपी गोपसुतस्य बालकृष्णस्य पुरतः लास्याय नर्तनं कर्तुं स्थिता किमिति चतुर्थः संशयः ॥ अत्र शुद्धसंदेहालङ्कारः ॥ २१ ॥

इत्थं भूरि वितर्क्य विस्मयपरैर्लोकोत्तरोऽयं नरै-
र्वृत्तान्तः सकलासु दिक्षु नचिराद् विश्रावितः पप्रथे ।
आश्रीमज्जनदीनलोकमखिलास्तां दर्शनात्पावनीं
मत्वा प्रेक्षितुमुत्सुकाः समभवंश्चान्द्रीमिवोद्यत्कलाम् ॥ २२ ॥

**इत्थमिति** । पूर्वोक्तप्रकारेण भूरि वितर्क्य विकल्पान् कृत्वा विस्मयपरैर्नरैः आश्चर्यभरितैः परैः अयं लोकोत्तरः अलोकसामान्यः वृत्तान्तः सकलासु दिक्षु विश्रावितः प्रचारितः प्रसिद्धोऽभूत् । अत एव आश्रीमज्जनदीनलोकं धनिकानारभ्य पामरपर्यन्तं अखिलाः सर्वे जनाः तां मीरां दर्शनाद् दर्शनेन प्रेक्षकाणां मनःशुद्धिकरीं मत्वा प्रेक्षितुमुत्सुकाः द्रष्टुमुत्कण्ठिताः समभवन् संबभूवुः चान्द्रीमिव यथा चन्द्रसंबंधिनीम् उद्यन्तीं कलां द्वितीया–बालचन्द्रम् अखिला दर्शनात्पावनीं मत्वा प्रेक्षितुमुत्सुका भवन्तीत्युपमा । अपि च प्रेक्षकाणां दर्शनौत्सुक्यरूपवाक्यार्धस्य प्रथमार्धगतः वार्ताप्रसिद्धिरूपो वाक्यार्थो हेतुः । तदत्र वाक्यार्थहेतुकं काव्यलिंगमप्यलङ्कारः । उपमया तस्य संसृष्टिः ॥ २२ ॥

कन्यारत्नविचेष्टितं नरपतिः श्रुत्वापि न व्यश्वसीत्
साक्षादस्य निदर्शनाय सहसा शुद्धान्तमेवाव्रजत् ।
तत्रावैक्षत योगिनीमिव सुतां कृष्णाजिनाध्यासिनीं
ध्यायन्तीं किमपि प्रशान्तमनसा श्रीकृष्णमूर्त्यग्रतः ॥ २३ ॥

**कन्येति** । नरपतिर्मीरायाः पिता कन्यारत्नविचेष्टितं दुहितुर्विलक्षणमाचरणं श्रुत्वापि लोकमुखाद् आकर्ण्यापि न व्यश्वसीदिदं सत्यमिति न श्रद्दधे । अत एव अस्य साक्षान्निदर्शनाय अस्य आचरणस्य स्वयमेव परीक्षणाय सहसा पूर्वावेदनं विना शुद्धान्तमेव अन्तःपुरमेव अव्रजत् गतवान् । एवकारेण आप्तैर्मन्त्रिभिरपि न संमंत्रितवानिति व्यज्यते । द्वितीयपादार्थस्य प्रथमपादगतवाक्यार्थहेतुकत्वात् काव्यलिंगम् । तत्र अन्तःपुरे

सुतां योगिनीमिव कृष्णाजिनाध्यासिनीं कृष्णमृगचर्मासनोपविष्टां प्रशान्तमनसा समाहितचेतसा किमपि तन्मात्रवेद्यं वस्तु ध्यायन्तीं श्रीकृष्णमूर्तेः अग्रतः पुरस्ताद् अवैक्षत दृष्टवान्। अत्रोपमालङ्कारः। उभयोः संसृष्टिः ॥ २३ ॥

**ध्यानान्ते विविधान् विचित्रमधुरान् संगीतलास्यादिकान्**
**सानन्दाश्रुभरं सगद्गदरवं चक्रे विधीन्मङ्गलान्।**
**आजन्मप्रभृतीदृशी तु घटना नालोकिता यत्स्वयं**
**राजा तत्प्रतिपत्तिमूढहृदयस्तामेव पश्यन् स्थितः ॥ २४ ॥**

**ध्यानान्त इति।** सा मीरा ध्यानान्ते इष्टदेवताध्यानं समाप्य विचित्रमधुरान् द्रष्टृविस्मयकरान् आनन्दकरांश्च संगीतलास्यादिकान् गानं नर्तनमादिशब्देन स्तुतिं प्रार्थनां च विविधान्मङ्गलविधीन् सानन्दाश्रुभरमानन्दबाष्पातिशयेन सह सगद्गदरवं भक्तिभावोद्रेकेण गद्गदस्वरेण सहितं च यथा भवति तथा चक्रे कृतवती। ईदृशी घटना तु एवंविधा प्रक्रिया आजन्मप्रभृति जन्मारभ्य यद् यस्मात् स्वयमात्मना नालोकिता न दृष्टासीत्। तस्माद्राजा प्रतिपत्तिमूढहृदयः किमिदं स्यादित्यवधारयितुमशक्तः तामेव पश्यन् स्थितोऽभूत्। अत्राद्भुतो रसः। मीरा आलंबनविभावो विचित्रमङ्गलविधीनामाचरणमुद्दीपनम्, अदृष्टपूर्वत्वाद् राज्ञश्चकितत्वमनुभावः, तस्य च प्रतिपत्तिमूढत्वं जडताख्यः संचारीभावः ॥ २४ ॥

**आविष्टा किमियं मदीयदुहिता वेतालभूतादिभिः**
**कैश्चिद्दुर्मतिभिः कुमार्गमथवा स्वार्थाय किं लम्भिता।**
**संजातः किमु कोऽपि दुर्विधिवशादस्या मनोविभ्रमो**
**हा हा यद्यचिरेण न प्रतिकृतं वत्सा विनश्येदियम् ॥ २५ ॥**

**आविष्टेति।** इयं मदीयदुहिता वेतालभूतादिभिर्वेतालः पिशाचराजः भूतः पिशाचः आदिशब्देन यक्षराक्षसविनायकग्रहाः संगृह्यन्ते। एतैः आविष्टा अभिभूता किम् इति वितर्कः। अयमाधिदैविकसन्तापं परामृशति। अथवा कैश्चिद्दुर्मतिभिर्दुर्जनैः स्वार्थाय स्वप्रयोजनप्राप्तये कुमार्गं कुत्सितं मार्गं लंभिता प्रापिता किम्। अयं च वितर्कः आधिभौतिकदुःखं लक्षीकरोति। अथवा दुर्विधिवशाद् अस्याः कोऽपि दुर्विज्ञेयः मनोविभ्रमः उन्मादः संजातः किम् इति तृतीयो वितर्कः आध्यात्मिकदुःखविषयः। हा हेति विषादे। वीप्सया तदतिशयः व्यज्यते। अचिरेण विलंबेन विना न प्रतिकृतं यदि विकृतेः प्रतीकारो न क्रियते चेत्तदियं वत्सा विनश्येत् विनष्टा भवेत्। अत्र प्रथमपादत्रये वितर्को भावः। हा हेति विषादः। अचिरेण प्रतिकृतं न चेदिति औत्सुक्यं वत्सा विनश्येदिति शङ्का। एवं चतुर्णां भावानां शबलता ॥ २५ ॥

अथ मीराया मातापितृभ्यां प्रतीकारोपायजिज्ञासया संवृत्तं परस्परालापं द्वाभ्यां वर्णयितुमारभते ।

**श्रद्धाहीनमतिः सुरार्चनविधौ क्षात्रैकबद्धादरः**
**संभ्रान्तो महिषीमभाषत नृपः कोऽयं विपाको विधेः ।**
**कान्ते किं करणीयमद्य दुहितुः स्वामिन्नलं चिन्तया,**
**वैकल्यप्रशमाय चिन्तय विधिं चित्ते किमप्यस्ति मे ॥ २६ ॥**

**श्रद्धेति** । क्षात्रैकबद्धादरः क्षत्रियसंबन्धिनि बाहुबलादिरजोगुणप्रधाने एकस्मिन् धर्मे बद्ध आदरः आसक्तिः येन सः । सुरार्चनविधौ देवपूजाविधाने श्रद्धया हीना मतिर्यस्य स नृपः अत एव संभ्रान्तः महिषीं राज्ञीं अभाषत । तद्यथा—कान्ते प्रिये कोऽयं विधेर्विपाकः ? किमद्य दुहितुः करणीयमिति प्रश्नः । स्वामिन् अलं चिन्तयेति राज्याः प्रतिवचनम् । वैकल्यप्रशमाय विकृतेः निवारणाय विधिं उपायं चिन्तय आलोच्य मां कथयेति नृपस्य पुनर्वचनम् । मे चित्ते किमप्यस्तीति उत्तरम् ॥ २६ ॥

**तन्मे ब्रूहि विवाह एव विकृतेरस्या व्यपोहक्षमः,**
**को मूढां परिणेष्यति क्षितितले यः कोऽपि तामर्हति ।**
**क्व प्राप्यः सदृशो वरः स सुलभः कन्या हि रूपान्विता**
**सा चेन्मूर्तिमनुव्रता नहि नहि प्राणेशमासेवते ॥ २७ ॥**

**तन्म इति** । तत्तव मनोगतं मे ब्रूहीति नृपः । अस्या विकृतेर्विवाह एव व्यपोहक्षमः निवारणसमर्थ इति राज्ञी । क्षितितले को मूढां परिणेष्यतीति नृपः । यः कोऽपि तामर्हति स एव तां परिणेष्यतीति राज्ञी । सदृशः कन्यानुरूपो वरः क्व प्राप्यः प्राप्तुं शक्य इति नृपः । स वरः सुलभः सुखेन लभ्यः हि यस्मात् कन्या रूपान्विता सुन्दरी भवतीति राज्ञी । सा मूर्तिमनुव्रता नियमेन सेवेत चेत् किं कर्तव्यमिति नृपः । नहि नहि सर्वथा प्राणेशं कान्तम् एव आसेवते शुश्रूषते इति राज्ञी ॥ २७ ॥

अथ मीराया विवाहमुद्दिश्य पिता संविधानं चकारेत्याह ।

**कन्यापक्षजुषा सयुक्तिकगिरा देव्या समाश्वासितो**
**राजा विश्वसनीयबान्धवजनानाकार्य संदिष्टवान् ।**
**जानीथैव यदद्य नः प्रियसुता देया गृहे वर्तते**
**तद्योग्यं वरमञ्जसा मृगयितुं यत्नः समाधीयताम् ॥ २८ ॥**

**कन्येति** । नरपतिः मीरायाः पिता कन्यापक्षजुषा दुहितुः पक्षपातिन्या तदीयश्रेयश्चिन्तयन्त्येत्यर्थः । देव्या सयुक्तिकगिरा । समुचितवाक्यजालेन समाश्वासितः समाधानं

प्रापितः सन् विश्वसनीयान् आप्तान् बान्धवजनान् आकार्य आहूय संदिष्टवान् संदेशं ददौ । तत्प्रकारमेवाह—अद्य सांप्रतं नः प्रियसुता मीरा देया विवाहयोग्या गृहे वर्तते इति यत्तज्जानीथैव तद् युष्माकं विदितमेव । तत्तस्यायोग्यमनुरूपं वरं मृगयितुमन्वेषयितुमञ्जसा शीघ्रमेव यत्नः समाधीयतां क्रियताम् ॥ २८ ॥

अथ बन्धुभिः कृतप्रयत्नस्य साफल्यमाह—

तत्कालेऽथ चितोरनामनगरे राजन्यचूडामणिः
सङ्गाख्यो नृपतिर्व्यराजत पुरा विष्वग्यशोभासुरः ।
शार्दूलो जयदृप्तमोगलमृगव्रातस्य यस्त्रासनः
सोढोच्चण्डविपद्भरो निजशिरो नम्रं न चक्रे द्विषाम् ॥ २९ ॥

**तत्काल इति** । अथ तत्काले चितोरनामनगरे पुरा पूर्वं विष्वग्यशोभासुरः सर्वतो व्यापिना यशसा भासुरः । प्रकाशमानो राजन्यचूडामणिः क्षत्रियश्रेष्ठः सङ्गनामा नृपतिः व्यराजत प्रसिद्धोऽभूत् । जयेन दृप्ता गर्विता मोगला यवनविशेषा एव मृगाः तेषां व्रातस्य समूहस्य त्रासनः भयङ्करः शार्दूलः व्याघ्रः । अनेन रूपकेण तस्य अन्यादृशः पराक्रमो व्यज्यते । सोढो धैर्येणानुभूतः उच्चण्डानामुग्राणां विपदां संकटानां भरः अतिशयः येन । एतेन तस्य धीरोदात्तत्वं व्यज्यते । सोऽयं द्विषां शत्रूणामग्रे निजशिरः नम्रं न चक्रे । मानिनामग्रगण्योऽयमिति तात्पर्यम् ॥ २९ ॥

दिष्ट्या तस्य नृपस्य सूनुरभवच्छ्रीभोजराजाह्वय-
स्तेजस्वी पितृवत्प्रतापगरिमप्रोद्धूतवैरिव्रजः ।
सोऽयं सत्कुलशीलयौवनगुणैः कन्यानुरूपो युवे-
त्यालोच्य स्वसुतां प्रदातुमकरोदस्मै वचोनिश्चयम् ॥ ३० ॥

**दिष्ट्येति** । दिष्ट्या सुदैवेन तस्य नृपस्य श्रीभोजराज इति आह्वयो नामधेयं यस्य स सूनुः पुत्रः अभवत् । कीदृशः—तेजस्वी पितृवत् पितेव प्रतापस्य शौर्यस्य गरिम्णा अतिशयेन प्रोद्धूतः निरस्तः वैरिणां व्रजः शत्रूणां संहतिर्येन सः । सोऽयं पुत्रः सत्कुलशीलयौवनगुणैः कन्यायाः अनुरूपः युवा तरुण इत्यालोच्य स्वसुतां तस्मै प्रदातुं वचोनिश्चयं वाग्दानरूपं निश्चितार्थमकरोत् ॥ ३० ॥

निर्दिष्टेऽथ वसन्तमङ्गलदिने लोकप्रमोदायने
मीरायाः सहसाभवद्विनविधिः कोलाहलैर्विघ्नितः ।
संभूतैर्वरयात्रया नरपतेः सौधान्तिकप्राप्तया
नानामङ्गलवाद्यघोषयुतया सौवर्णमुद्राकिरा ॥ ३१ ॥

**निर्दिष्ट इति** । अथ निर्दिष्टे निश्चिते लोकप्रमोदायने लोकानां प्रमोदस्य आनंदस्य अयने

आस्पदे वसन्तमङ्गलदिने वसंतऋतोः शुभदिवसे मीराया दिनविधिः नित्यपूजादिकार्य-कलापः नरपतेः सौधान्तिकप्राप्तया प्रासादसमीपमागतया नानामङ्गलवाद्यानां घोषेण युतया सौवर्णमुद्राकिरा सुवर्णमयीः मुद्रा नाण्यविशेषा किरतीति सौवर्णमुद्राकीः तया वरयात्रया कारणेन संभूतैः जनितैः कोलाहलैः सहसा विघ्नितोऽभवद् जातान्तरायोऽभूत् । सहसे-त्यनेन पित्रा कृतवरनिश्चयस्य मीरया अज्ञातपूर्वत्वं व्यज्यते ॥ ३१ ॥

क्षत्राचारमनुस्मरन् परिणयं खड्गोपहाराङ्कितं
सर्वाडम्बरगौरवेण दुहितुः श्रीरत्नसिंहो व्यधात् ।
आतृप्तिद्विजभोजनादि रचयन्मीरामथावेदयद्
दत्तासि त्वमितः सुते भवति ते श्रीभोजराजः पतिः ॥ ३२ ॥

**क्षत्राचारमिति ।** श्रीरत्नसिंहः क्षत्राचारं क्षत्रियाणां संप्रदायं अनुस्मरन् खड्गोपहा-राङ्कितं खड्गस्य उपहारः उपदीकरणम् एव अङ्कितं चिह्नं यस्य सः । तं दुहितुः परिणयं विवाहं सर्वाडम्बरगौरवेण राजयोग्यसमस्तविभवातिशयेन व्यधात् चकार । आतृप्तिद्विज-भोजनादि ब्राह्मणान् तृप्तिपर्यन्तं भोजयित्वा आदिशब्देन तांबूलदक्षिणापारितोषकाणि च दत्त्वेत्यर्थः । अथ मीरां आवेदयद् विदितवृत्तान्तां चकार । तत्प्रकारमेवाह—हे सुते त्वं दत्तासि वराय प्रतिपादितासि । स च वरः श्रीभोजराजः इतः अद्यप्रभृति ते पतिः भवति ॥ ३२ ॥

अथ कन्याजनकयोः संवृत्तमालापं त्रिभिः श्लोकैः वर्णयति ।

आगन्ता किमिहैष नैष्यति सुते स्थेयं किमस्माद्विना
गन्तव्यं ननु मन्दिरं शुभदिने पत्युस्त्वयैवाचिरात् ।
प्राणान् गोपयितुं कथं नु भगवन्मूर्तिं विना शक्नुयां
कामं तत्र नयस्व तामपि ततो हृष्टा प्रयास्याम्यहम् ॥ ३३ ॥

**आगन्तेति ।** एष मे पतिः इह अस्मद्गृहं आगन्ता आगमिष्यति किम् ? सुते नैष्यति नागमिष्यति । अस्माद्विना पत्या विना स्थेयं मयात्र स्थातव्यं किम् ? ननु त्वयैव शुभदिने पत्युर्मन्दिरं अचिराद् गन्तव्यम् । मया गन्तव्यं चेत्तर्हि भगवन्मूर्तिं मया नित्योपास्यमानां श्रीकृष्णमूर्तिं परित्यज्य प्राणान् गोपयितुं जीवितुमित्यर्थः । कथं नु शक्नुयां सर्वथा न शक्ष्यामीत्यर्थः । तामपि मूर्तिमपि कामं स्वेच्छया तत्र पतिगृहं नयस्व । ततः एवमनुज्ञाता चेदहं हृष्टा सानन्दं प्रयास्यामि गमिष्यामि ॥ ३३ ॥

वत्से तात परित्यज भ्रममिमं को नु भ्रमस्ते मतो
व्यासङ्गस्तव हेयवस्तुनि कथं हेयं हरेरर्चनम् ।

**मूर्तिप्रीतिरनन्तदुःखजननी हर्षप्रदा सा तु मे**
**हृष्येस्त्वं गृहिणीपदे कथमदः पत्युः प्रसादेन ते ॥ ३४ ॥**

**वत्स इति** । वत्से ! कन्यां प्रति पितुः संबोधनमिदम् । तातेति पितरं प्रति कन्यायाः । इमं भ्रमं मोहं परित्यजेति पितुरुपदेशः । को नु भ्रमस्ते मतः इति कन्यायाः प्रश्नः । हेयवस्तुनि त्याज्यविषये तव व्यासङ्गः आसक्तिरेव भ्रम इति पितुरुत्तरम् । हरेः अर्चनं श्रीकृष्णस्य पूजा हेयं हातुं योग्यं कथं भवेदिति कन्याया जिज्ञासा । मूर्तौ विग्रहे प्रीतिः आराधनं यस्मादनन्तदुःखजननी तस्माद् हरेरर्चनं हेयमिति पितुर्बोधनम् । सा तद्विग्रहाराधना सक्तिः तु मे हर्षप्रदा मामानन्दयतीति कन्यायाः प्रतिवचनम् । त्वं गृहिणीपदे हृष्येः आनन्दं प्राप्तुमर्हसि न तु मूर्तिं पूजयेति शेषः । कथं अदः तद् गृहिणीपदे स्थितया केनोपायेन हर्षप्राप्तिः स्यादित्यर्थः । ते पत्युः प्रसादेन अनुग्रहेण इति पितुरुत्तरम् ॥ ३४ ॥

**संपाद्यः परमेष केन विधिना बालप्रभुः सेव्यताम्**
**तत्सेवा ननु कीदृशी चर हितं येनाप्यते निर्वृतिः ।**
**श्रद्धा भक्तिरिति द्वयं ननु पितः सत्साधनं निर्वृते-**
**स्तस्मिन् प्रेम तनुष्व तात हृदये गाढं तदस्त्येव मे ॥ ३५ ॥**

**सम्पाद्य इति** । परं किंतु एष पत्युः प्रसादः केन उपायेन संपाद्यः लब्धुं शक्यः इति कन्यायाः प्रश्नः । बालप्रभुः राजकुमारः ते पतिः सेव्यतां तस्य सेवां कुरु । शेषं स्पष्टम् ॥ ३५ ॥

**श्वश्रूमन्दिरमेष्यतीं शुभदिने राज्ञी नवोढां सुता-**
**मालिङ्ग्यालपितुं च शक्तिविकला जोषं स्थिता नाडिकाम् ।**
**तां मीराथ नियन्त्रिताश्रुनयनामूचेऽम्ब मा मा शुचो**
**भूरि प्रेम यदस्ति ते मयि सखीष्वेतत्सदा बध्यताम् ॥ ३६ ॥**

**श्वश्रूमन्दिरमिति** । श्वश्रूमन्दिरं पतिगृहमेष्यतीं गन्तुमुद्यतां नवोढां सुतामालिङ्ग्य आलपितुं च शक्तिविकला उपस्थितकन्यावियोगानुसंधानजन्यदुःखेन वक्तुमप्यशक्ता नाडिकां क्षणमात्रं जोषं स्थिता तूष्णीं बभूव । अथ मीरा नियन्त्रिताश्रुनयनां निरुद्धबाष्पां बाष्पनिरोधश्च प्रस्थानवेलाया अश्रुमोचनममङ्गलमिति हेतोः तां मातरं ऊचे । तत्प्रकारमाह—अम्ब मा मा शुचः सर्वथा दुःखं मा कुरु । मयि यत्ते भूरि प्रेमास्ति एतत्सदा सखीषु बध्यताम् । निवेशयेत्यर्थः ॥ अथ पुत्रवात्सल्यरूपा रतिर्भावः ॥ ३६ ॥

अथ मीरायाः श्वशुरपुरीं प्रवेशं वर्णयति ।

**सानन्दं स्वपुरीं पुनः प्रविशति श्रीसंगबन्धुव्रजे**
**कन्यारत्ननरेन्द्रसूनुसहिते बद्धोत्सवाडम्बरे ।**

गायन्ति प्रकिरन्ति लाजकुसुमं कुर्वन्ति चारात्रिकं
सूताः सौधगताङ्गनाः प्रतिगृहं सौभाग्यवत्यः स्त्रियः ॥ ३७ ॥

**सानन्दमिति** । कन्यारत्ननरेन्द्रसूनुसहिते वधूवराभ्यां अन्विते बद्धोत्सवाडम्बरे श्वशुरस्य बन्धूनां तां नेतुमागतानां व्रजे समूहे सानन्दं स्वपुरीं प्रविशति सति सूताः गायन्ति स्तुतिबन्दिनः जगुः । सौधगताङ्गनाः प्रासादोपरि स्थिताः स्त्रियः लाजकुसुमं प्रतिगृहं लाजाश्च कुसुमानि च लाजकुसुमं प्रकिरन्ति विशेषेण चिक्षिपुः । किं च सौभाग्यावत्यः स्त्रियः जीवद्भर्तृकाः स्त्रियः प्रतिगृहं गृहे गृहे आरात्रिकं मंगलनीराजनं कुर्वन्ति चक्रुः । अत्र यथासंख्यालङ्कारः ॥ ३७ ॥

अथ मीरायाः मुखनेत्रस्वरगतानां सौन्दर्यं अप्रस्तुतप्रशंसया गमयति ।

कासारे कमलावलिः कलयति म्लानत्वमाकस्मिकं
हंसास्तस्य तटे निवृत्तगतयस्तिष्ठन्ति दूरे ह्रिया ।
मीनाः संकुचितेक्षणाश्च विमुखा मज्जन्ति नीचैर्जले
जायन्ते परुषस्वराः परभृताश्चैत्रेऽपि मीरान्तिके ॥ ३८ ॥

**कासार इति** । चैत्रेऽपि वसंतमासेऽपि मीरान्तिके मीरायाः समीपे कासारे सरसि स्थितः यः कमलावलिः कमलानां वृन्दं तदाकस्मिकं म्लानत्वं कलयति सहसा शुष्कं भवति । अस्मादप्रस्तुतात् प्रस्तुतोऽर्थः मीरायाः मुखसौन्दर्यं गम्यते । तस्य कासारे तटे ये हंसास्ते ह्रिया लज्जया निवृत्तगतयः गमनं त्यक्त्वा दूरे तिष्ठन्ति । एतेन तस्याश्चारु गमनं व्यज्यते । किंच मीनाः कासारगता मत्स्या संकुचितेक्षणाः आमीलितनेत्रा विमुखा पराङ्मुखा भूत्वा जले नीचैः मज्जन्तीति व्रीडयात्मानं निगूहन्तीति तात्पर्यम् । एतेन मीराया नेत्रसौंदर्यातिशयः प्रतीयते । परभृताः कोकिलाः परुषस्वराः कर्कशध्वनयः जायन्ते भवन्ति । एतेन मीरायाः स्वरमाधुर्यातिशयः ध्वन्यते । इह सर्वत्रापि अप्रस्तुतप्रशंसालङ्कारः । समात्समव्यञ्जनरूपो भेदः ॥ ३८ ॥

शुद्धान्तं च विवेश सा प्रववृते भूयांश्च भव्योत्सव-
स्तस्याः श्रीमदुपायनानि विदधे भूषाश्च साध्वीगणः ।
श्वश्रूर्बन्धुयुता स्नुषातनुजयोरार्द्राक्षतारोपणं
निष्कम्पेन तु सम्भ्रमेऽपि मनसा श्रीकृष्णपूजां वधूः ॥ ३९ ॥

**शुद्धान्तमिति** । सा मीरा शुद्धान्तं श्रीसङ्गनृपस्य अन्तःपुरं विवेश च भूयांश्च महान् भव्योत्सवः मंगलोत्सवः प्रववृते च । इति चकारद्वयेन प्रवेशप्रवृत्तिक्रिययोर्यौगपद्यद्योतनात् समुच्चयालङ्कारः । किं च साध्वीगणः पतिव्रतासमूहः तस्या मीरायाः श्रीमदुपायनानि महार्हाणि वस्त्राभरणानि भूषाश्च अलंकारांश्च विदधे चक्रे । अपि च

श्वश्रूः बन्धुयुता बान्धवैः समेता स्नुषातनुजयोः वधूवरयोः आर्द्राक्षतारोपणं हरिद्राकुङ्कुमलिप्तानां अक्षतानां अखण्डतण्डुलानां आरोपणं तत्प्रक्षेपरूपं मंगलविधिं विदधे । वधूस्तु मीरा पुनः संभ्रमेऽपि महति संभ्रमे चलत्यपि श्रीकृष्णपूजां निष्कम्पेन मनसा विदधे । अत्र सर्ववाक्यार्थानां प्रकृतार्थगोचरत्वात् एकक्रियाभिसंबन्धाच्च तुल्ययोगितालंकारः । तस्य समुच्चयेन संसृष्टिः ॥ ३९ ॥

**वृत्ते सर्वमहोत्सवे नरपतेर्जाया वधूमब्रवीत्**
**बालेऽद्य प्रभृति त्वमेव सदने लक्ष्मीश्च गौरी च गीः ।**
**भाविक्ष्मापतिरेष ते प्रियतमो भूयाः प्रवीरप्रसू-**
**रित्युक्ताप्यशृणोन्न किंचिदिव सा गोपैकमग्नान्तरा ॥ ४० ॥**

**वृत्त इति** । सर्वमहोत्सवे वृत्ते समाप्ते सति नरपतेर्जाया राज्ञी वधूं स्नुषां अब्रवीत् । तत्प्रकारमाह— बाले इति प्रेमसंबोधनम् बाला षोडशवार्षिकेत्यपि संगच्छते । अद्य प्रभृति एतद्दिनमारभ्य सदने अस्मद्गृहे त्वमेव नान्या लक्ष्मीश्च संपदभिमानिनी देवता च गौरी मांगल्याभिमानिनी देवता गीः विद्याभिमानिनी देवता । अनेन तस्याः पतिः विष्णु-शिव-ब्रह्मरूपः इति व्यज्यते । एतत्त्रयमस्ति । इति रूपकम् । एष ते प्रियतमो भर्ता भाविक्ष्मापतिः भविष्यन् राजा युवराज इत्यर्थः भवतीति शेषः । प्रवीरप्रसूः महावीरस्य प्रसूः जननी भूयाः भवेत्याशीः । इत्युक्तापि गोपैकमग्नान्तरा श्रीकृष्णे एकस्मिन् मग्नं लीनं अन्तरं चित्तं यस्याः सा मीरा न अशृणोदिव । अत्र अश्रवणस्य गोपैकमग्नान्तरत्वं हेतुरिति पदार्थहेतुकं काव्यलिंगमलंकारः ॥ किं च । अत्र देवता विषया रतिर्भावः सञ्चारी गोप आलम्बनम् । तस्य सर्वेभ्यः प्रियतमत्वमुद्दीपनम् । श्वश्रूप्रियवचनस्याप्यश्रवणरूपं विषयान्तरवैमुख्यमनुभावः ॥ ४० ॥

अत्र श्वश्रूस्नुषयोः संवृत्तमालापं श्लोकत्रयेण कथयति ।

**वध्वाः शून्यमनस्कतामवयती राज्ञी विरम्य क्षणं**
**भूयः प्राह मनस्तव क्व नु गतं श्रीशेऽनिशं वर्तते ।**
**पूज्या नः कुलदेवता तव सदा का नाम सा ब्रूहि मे**
**श्रीदुर्गा विजयप्रदा रणभुवि क्षत्रस्य शक्तिः परा ॥ ४१ ॥**

**वध्वा इति** । राज्ञी वध्वाः शून्यमनस्कतां चित्तस्य अनवहितत्वं अवयती जानती क्षणं विरम्य भूयः प्राह । तत्प्रकारं कथयति— तव मनः क्व नु गतं इति प्रश्नः । श्रीशे लक्ष्मीपतौ श्रीकृष्णे अनिशं सर्वदा वर्तते । इति मीरायाः प्रत्युक्तिः । नः कुलदेवता अस्मदुपास्यदेवता तव पूज्या त्वया उपासनीया इति श्वश्रूः । सा देवता का नाम मे ब्रूहि इति मीराया जिज्ञासा । श्रीदुर्गानाम्नी क्षत्रस्य क्षत्रियाणां रणभुवि युद्धरंगे विजयप्रदा परा शक्तिः कुलदेवता भवतीति शेषः ॥ ४१ ॥

**बाल्यादेव गताहमम्ब शरणं श्रीकृष्णमेव ध्रुवं**
**तस्यैवाङ्घ्रिसरोजयुग्मनिहितं नित्यं मदीयं शिरः ।**
**नान्यद्दैवतमस्ति मे भुवि परानन्दप्रदं चेतसो**
**यावज्जीवमहं तमेव परया भक्त्या भजे भीहरम् ॥ ४२ ॥**

**बाल्यादिति** ॥ अम्ब, अहं बाल्यात्प्रभृत्येव श्रीकृष्णमेव ध्रुवं एकचित्ततया शरणं गतास्मि । मदीयं शिरः नित्यं तस्यैव श्रीकृष्णस्य अङ्घ्रिसरोजयुग्मनिहितं पादारविंदद्वये प्रणतं भवति । मम चेतसः परमानन्दप्रदं अन्यद्दैवतं भुवि नास्ति । अत एवाहं भीहरं संसारभयनाशनं तमेव परया भक्त्या यावज्जीवं भजे । अत्र चतुर्थपादगतवाक्यार्थस्य पूर्वपादत्रयगतवाक्यार्थसमुच्चयो हेतुरिति वाक्यार्थहेतुकं काव्यलिंगम् ॥ ४२ ॥

**वध्वास्तद्वचनं निशम्य चकिता राज्ञी बभाषे पुनः**
**कृष्णे मा भव मोहिता नरि मुधा देवी परा पूज्यताम् ।**
**मातः श्वश्रु तदेकवर्जमखिलं वश्या करिष्याम्यहं**
**क्षन्तव्यास्मि गृहीतपूर्वमनघं भङ्क्तुं व्रतं नोत्सहे ॥ ४३ ॥**

**वध्वा इति** । राज्ञी वध्वा मीरायाः तद्वचनं निशम्य श्रुत्वा चकिता भीतविस्मिता पुनर्बभाषे । तत्प्रकारमाह—नरि मनुष्यमात्रे कृष्णे मुधा वृथा मोहिता मा भव । परा देवी सर्वाधिका श्रीदुर्गादेवता पूज्या । अत्र मीरायाः प्रतिवचनमाह—मातः श्वश्रु, तदेकवर्जमखिलं त्वदुक्तमेकं देवतान्तरासक्तिरूपं वर्जयित्वा अन्यत्सर्वं वश्या त्वय्यधीना अहं करिष्यामि । क्षन्तव्यास्मि प्रकृतत्वदीयोपदेशव्यतिक्रममिति शेषः । अपरं च गृहीतपूर्वं मया प्रथममेवाङ्गीकृतं अनघं निर्दोषं व्रतं भङ्क्तुं न पारयामि ॥ ४३ ॥

**विज्ञाप्येति सगद्गदं चरणयोस्तस्याः पपात स्नुषा**
**दृष्ट्वा तादृगदृष्टपूर्वचरितं हृष्टापि रुष्टेव ताम् ।**
**श्वश्रूस्तावदनिन्ददेव नितरां राजन्यदर्पोज्ज्वला**
**बिभ्राणां कुलदेवताविमुखतां क्षत्रव्रतोल्लङ्घिनीम् ॥ ४४ ॥**

**विज्ञाप्येतीति** । इति स्नुषा सगद्गदं विज्ञाप्य तस्या राज्ञ्याश्चरणयोः पपात । श्वश्रूः तादृगदृष्टपूर्वचरितं तादृग् दृष्ट्वा अन्तःप्रमुदितापि रुष्टेव क्रुद्धामिव बहिरात्मानं प्रकाशयन्ती राजन्यदर्पोज्ज्वला क्षत्रियोचितगर्वेणोत्कटा सती कुलदेवताविमुखतां बिभ्राणां निजकुलदैवतपराङ्मुखीं अतः क्षत्रव्रतोल्लङ्घिनीं तां नितरामनिन्ददेव । एवकारेण हर्ष-

लक्षणप्रशंसायाः व्यवच्छेदः । अत्र कुलदेवतावैमुख्यस्य क्षत्रव्रतलङ्घनहेतुत्वात् पदार्थहेतुकं काव्यलिंगम् ॥ ४४ ॥

**अत्यन्तं कटुदारुणप्रलपनैर्निर्भर्त्सितापि स्वका-**
**च्छ्रद्धाभक्तिपथाच्चचाल नहि सा गौरीव भावस्थिरा ।**
**ऊदानाम ततो वरस्य भगिनी क्षुद्रान्तरा प्रायसत्**
**तच्चेतःपरिवर्तने न तु पुनः साफल्यमाप श्रमैः ॥ ४५ ॥**

**अत्यन्तमिति** । सा मीरा गौरीव भावस्थिरा दृढसंकल्पा अत्यन्तं कटुदारुणप्रलपनैः कटुभिः तीक्ष्णैः दारुणैः भयोत्पादकैः प्रलपनैः अपकारवचनैः निर्भर्त्सितापि तर्जितापि स्वकाच्छ्रद्धाभक्तिपथात् आत्मीयाद् श्रद्धाया भक्तेश्च पथः मार्गात् श्रीकृष्णमुद्दिश्य स्वीकृतात् तपोयोगादित्यर्थः, न चचाल नैव प्रच्युताभूत् । ततः श्वश्रूवचननैष्फल्यानन्तरं क्षुद्रान्तरा अल्पचित्ता ऊदानाम वरस्य भगिनी ननान्दा तच्चेतःपरिवर्तने मीराया मनसः अन्यथाकरणे प्रायसत् प्रयत्नं कृतवती न तु पुनः सा श्रमैः भूरिप्रयत्नैरपि साफल्यमाप कृतार्थाऽभूत् ॥ अत्र पूर्णोपमा ॥ ४५ ॥

**धावल्यं सितनीरजं त्यजति किं पङ्केऽपि नित्यस्थितं**
**सौभाग्यं विजहाति किं हिमगिरिश्छन्नस्तुषारैरपि ।**
**कान्तिं मुञ्चति किन्न हीरकमणिर्लोष्टैश्च सन्दूषितः**
**किं चित्रं यदि धर्मतो न चलिता मीरापि तत्तर्जनैः ॥ ४६ ॥**

**धावल्यमिति** । सितनीरजं श्वेतकमलं पङ्केऽपि नित्यस्थितं पङ्के नित्यस्थितमपि धावल्यं त्यजति किम् । नैव त्यजतीत्यर्थः । हिमगिरिर्हिमालयशैलः तुषारैश्छन्नोऽपि सौभाग्यं अनंतरत्नप्रभत्वादिमाहात्म्यं नैसर्गिकं रामणीयकं च विजहाति किम् । नैव विजहाति । हीरकमणिः वज्रमणिः लोष्टैश्च सन्दूषितः पांसुमृत्तिकादिभिः दूषितोऽपि कान्तिं स्वाभाविकीं दीप्तिं मुञ्चति किन्नु । नैव मुञ्चति । मीरा तयोः श्वश्रूननान्द्रोः तर्जनैर्भर्त्सनैः धर्मतः स्वीकृतव्रतान्न चलिता यदि न प्रच्युता चेत् किं चित्रम् । न किंचिदाश्चर्यमित्यर्थः । अत्र प्रथमपादत्रयगतेषु अप्रस्तुतवाक्यार्थेषु उपमानभूतेषु त्यजति विमुञ्चतीत्येकार्थकक्रियासाधर्म्याच्चतुर्थपादगतोपमेयवाक्येऽपि न चलितेति समानार्थकशब्दप्रयोगाच्च प्रतिवस्तूपमालङ्कारः ॥ ४६ ॥

**वत्सा माङ्गलिकक्रियाविधिवशाद्दूराध्वतश्चाकुला**
**तस्यै यत्परिकल्पितं शुभगृहं तत्सत्वरं नीयताम् ।**
**देव्यादेशमिति द्रुतं श्रुतवती शुद्धान्तमुख्याङ्गना**
**तां कन्यां निजधात्रिकासहचरीं वृद्धा निनायान्तरम् ॥ ४७ ॥**

**वत्सेति** । वृद्धा शुद्धान्तमुख्याङ्गना अन्तःपुरस्य मुख्याधिकारिणी देव्यादेशं राज्ञ्याः आज्ञावचनं श्रुतवती श्रुत्वा । तदेव वचनमाह—वत्सा मीरा माङ्गलिकक्रियाविधिवशात् शुभकार्यानुष्ठानसम्भ्रमहेतोः दूराध्वतश्च दीर्घप्रयाणश्रमाच्च आकुला भवतीति शेषः । तद्गृहं सत्वरं सा नीयताम् । इदं च श्रुत्वा सा वृद्धा तां कन्यां निजधात्रिकासहचरीं पितृगृहादानीतया धात्र्या सह अन्तरं कल्पितप्रकोष्ठं द्रुतं निनाय । अत्र सत्वरं तदीयगृहं प्रति नयनस्य प्रथमपादगतदूराध्वाद्याकुलत्वरूपवाक्यार्थहेतुकत्वात् काव्यलिङ्गमलङ्कारः ॥ ४७ ॥

अथ मीरा तत्र गत्वा किं किं कृतवतीत्यादिकां दिनचर्यां वर्णयति त्रिभिः श्लोकैः ।

**स्नाता शीतसुगन्धिनिर्मलजले पीताम्बरं बिभ्रती**
**धात्रीग्राहितगन्धवासरुचिरा सीमन्तभूषोज्ज्वला ।**
**वासान्तः सुविविक्तमञ्जुलपदे विन्यस्य मूर्तिं प्रभो-**
**र्मीरा प्राक्रमत प्रशान्तमनसा श्रीकृष्णपूजाविधिम् ॥ ४८ ॥**

**स्नातेति** । मीरा शीतसुगन्धिनिर्मलजले शोभनगन्धयुक्ते विमलशीतोदके स्नात्वा पीताम्बरं बिभ्रती धारयित्वा धात्रीग्राहितगन्धवासरुचिरा धात्र्या समर्पितेन गन्धवासेन पटवासकादिसुगन्धिद्रव्येण रुचिरा कमनीया सीमन्तभूषोज्ज्वला सीमन्ताभरणेन दीप्यमाना वासान्तः शयनगृहाभ्यन्तरे सुविविक्तमञ्जुलपदे अत्यन्तमेकान्तनिर्मले रमणीये च प्रदेशे प्रशान्तमनसा प्रभोर्मूर्तिं श्रीकृष्णस्य विग्रहं विन्यस्य प्रतिष्ठाप्य श्रीकृष्णपूजाविधिं प्राक्रमत कर्तुमारेभे ॥ ४८ ॥

**निद्राति स्म मिताशिनी नरपतेरामध्यरात्रं सुता**
**शय्योत्थायमथारुरोह विमला सौधाग्रगां वाटिकाम् ।**
**पूजापुष्पमपश्च सञ्चितवती वासं पुनः प्राविशत्**
**विश्रब्धं व्यतनोत्पुरेव भजनं यावच्च भानूदयम् ॥ ४९ ॥**

**निद्रातीति** । नरपतेः सुता राजकुमारी मीरा मिताशिनी मितं भुक्त्वा आमध्यरात्रम् अर्धरात्रपर्यन्तं निद्राति स्म । अथानन्तरं शय्योत्थायं शयनादुत्थाय विमला कृतशौचादिक्रिया सौधाग्रगां प्रासादोपरिवर्तिनीं वाटिकां कृत्रिमपुष्पोपवनम् आरुरोह आरोहति स्म । पूजापुष्पं पूजार्थं पुष्पाणीति जात्येकवचनमपश्च अम्बोदकं च संचितवती गृहीत्वा वासं शयनागारं पुनः प्राविशत् प्रविशति स्म । किं च । भानूदयं यावत् सूर्योदयपर्यन्तं पुरेव पूर्वं यथा पितृगृहे करोति स्म तथैव विश्रब्धं निराबाधं भजनं कीर्तनं व्यतनोत् करोति स्म ॥ ४९ ॥

**निर्वृत्तप्रभुकीर्तना नृपसुता सुस्मेरवक्त्राम्बुजा**
**प्रोद्यद्भास्करमण्डलं सह खगैः सानन्दमभ्युज्जगौ ।**

आसाद्य श्वशुरौ प्रणाममकरोत्पत्या सह श्रद्धया
लब्धाशीरथ वासरं व्यगमयद् व्यग्रा सखीभिः समम् ॥५०॥

**निर्वृत्तेति।** नृपसुता मीरा निर्वृत्तप्रभुकीर्तना श्रीकृष्णस्य स्तुतिं समाप्य सुस्मेरवक्त्राम्बुजा स्मयमानमुखारविन्दा प्रोद्यद्भास्करमण्डलमुदयमानसूर्यबिंबम् अभिमुखीकृत्य खगैः पक्षिभिः सह सानन्दमुच्चैः गानं चकार। अत्र उज्जगौ इत्येकशब्देन मीरापक्षे उच्चैः सुष्टावेति, खगपक्षे च उच्चैः चुकूजुरिति अर्थभेदे सत्यपि एकक्रियाप्रयोगादभेदाध्यवसायमूला श्लेषभित्तिका अतिशयोक्तिर्मूलभूता वर्तते। अत एव तन्मूला सहोक्तिरलङ्कारः॥ अपि च श्वशुरौ पत्युर्मातापितरौ आसाद्य पत्या सह श्रद्धया प्रणाममकरोत्। लब्धाशीः तयोः आशिषं प्राप्य अथ सखीभिः समं वासरं दिवसं व्यग्रा अनवधानचित्तेव श्रीकृष्णे निरन्तरमेकाग्रत्वाद् व्यगमयत् निनाय। अत्र तृतीयचतुर्थपादयोः सहोक्तौ सत्यामपि नालङ्कारोऽतिशयोक्तिमूलत्वाभावात्॥ ५०॥

चिन्तामुक्तमनाः स्थिता नृपसुता संमोदपीनास्म्यहं
सा भक्तिं भरते भृशं भगवति स्वान्तं प्रसन्नं मम।
निष्कामा तरुणीपदस्पृगपि सा मुक्तास्मि दुःखैरहं
सा तप्त्री फलभागिनी त्वहमिति व्यस्मेष्ट वृद्धाङ्गना॥ ५१॥

**चिन्तेति।** वृद्धाङ्गना मीराया धात्री व्यस्मेष्ट विस्मिताभूत्। तत्र कारणमाह—सा मीरा तप्त्री तपश्चरतीत्यर्थः। फलभागिनी तत्तपसः फलस्य भागिनी लब्ध्री तु अहमस्मि। इति यो जनस्तपश्चरति स एव फलभाग् भवतीति तपःफलयोः कार्यकारणयोः सामानाधिकरण्यमुचितम्। अत्र तु तपःकारणभूता मीरा तत्कार्यरूपफलभागिनी त्वहमिति निरूपणादसङ्गत्यलङ्कारः। पुनस्तमेवालङ्कारमुद्भावयन् तपश्चरणप्रकारं त्रिभिः पादैः प्रपञ्चयति यथा। नृपसुता मीरा चिन्तामुक्तमनाः सांसारिकचिन्तया मुक्तं मनो यस्याः सा स्थिता वर्तते। अहं धात्री संमोदपीना आनंदपूर्णास्मि। अत्रापि चिन्ताराहित्यहर्षयोः कार्यकारणभावयोः भिन्नदेशवर्तित्वात् स एवालङ्कारः। सा भगवति भक्तिं भृशं भरते मम स्वान्तं प्रसन्नं भवति। तरुणीपदस्पृगपि तारुण्यदशामारोहन्त्यपि सा मीरा निष्कामा भवति। अहं दुःखैर्मुक्तास्मि। इति द्वितीयतृतीयपादयोश्च पूर्ववदलङ्कारः। किं च चरमपादगतवाक्यार्थस्य पूर्वपादत्रयवाक्यार्थहेतुकत्वात् काव्यलिंगम्। तस्मादुभयोः सङ्करः॥ ५१॥

संजाता हि यदा त्रयोदशवया निर्व्याजमुग्धान्तरा
मीरा पुष्पवती बभूव सुदिने रम्ये वसन्तोत्सवे।
शारीरप्रकृतेर्दशामविदुषी साभूद्यथा विव्हला
कन्यान्तःपुरचारिणी समभवद्वृद्धा तया हर्षुला॥ ५२॥

**संजातेति** । निर्व्याजमुग्धान्तरा सरलमुग्धमानसा मीरा यदा हि त्रयोदशवयाः संजाता तदा रम्ये वसन्तोत्सवे सुदिने पुष्पवती बभूव । स्फुटम् । यथा सा शारीरप्रकृतेः निजशरीरस्वभावस्य कालोपस्थितस्य दशां विकृतिं अजानती विव्हला व्याकुला अभूत् तथा वृद्धा कन्यान्तःपुरचारिणी धात्री हर्षुला समभवत्संजाता ॥ ५२ ॥

**आराद्भूरिमनोरमा वसुमती रेजे सपुष्पोद्गमा**
**वल्गन्ति स्म विकासिपद्मवदनाः श्रीपद्मिनीनां गणाः ।**
**सौभाग्याङ्कपरागयुक् सुमनसस्तेनुः प्रियान्दोलनां**
**सञ्चेरुः प्रमदावनेषु मधुपाः पूर्वर्तुदिव्योत्सवे ॥ ५३ ॥**

**आरादिति** । पूर्वर्तुदिव्योत्सवे प्रथमऋतुप्रयुक्तमङ्गलोत्सवप्रसङ्गे इति कुमारीपक्षे । अन्यत्र पूर्वः ऋतुः वसन्तः । तत्कालिके महोत्सवे वसन्तविजृम्भणकाले इत्यर्थः । सपुष्पोद्गमा ऋतुमती वसुमती धनिका राजपुत्रीत्यर्थः । अन्यत्र पुष्पिता भूमिरिति वसन्तपक्षे । आरात् समीपे राजगृहमध्ये इति कुमारीपक्षे । 'आराद्दूरसमीपयो'रित्यमरः । अन्यत्र दूरे समीपे च इत्यनेन सर्वदिक्ष्वपि इति वसन्तपक्षे । भूरि मनोरमा रेजे नितान्तरमणीया प्रकाशते स्मेत्युभयत्रापि । विकासिपद्मवदनाः प्रकाशमानकमलतुल्यमुखाः श्रीमतीनां पद्मिनीनां सम्पन्नश्रेष्ठनारीणां गणाः समूहाः आरात् कुमार्याः समीपे वल्गन्ति स्म प्रमोदेन गतागतं कुर्वन्ति स्मेति कुमारीपक्षे । अन्यत्र विकासीनि पद्मान्येव वदनानि यासां श्रीपद्मिनीनां समृद्धकमलसरसीनां गणा इति वसन्तपक्षे । पुनश्च आरात्समीपे कुमारीगृहे इत्यर्थः । सौभाग्यं परिमलादिसमृद्धिः सैवाङ्को लक्षणं तद्युक्ताः । तादृशपरागयुक्ताश्च सुमनसः पुष्पाणि प्रियां मनोहरां दोलनां लम्बमानत्वं तेनुश्चक्रुः । सर्वत्र सुगन्धिपुष्पमालाः समुल्लम्बिता इति यावद्, अन्यत्र सौभाग्यस्य वेषाभूषादिसमृद्धेरङ्कं लक्षणं पान्ति रक्षन्तीति सौभाग्याङ्कपाः सुवेषभूषालङ्कृता इति यावत्, ते रागयुजः प्रीतिमन्तः सुमनसः प्रसन्नमनसो रसिकविद्वांसश्च प्रियाणां निजप्रेयसीनामान्दोलनां प्रेङ्खा-सञ्चालनं तेनुश्चक्रुरिति वसन्तपक्षे । किञ्च मधुपाः पीतमद्याः राजस्त्रीपुरुषा इति शेषः । प्रमदावनेषु अन्तःपुरोपवनेषु आरात् सञ्चेरुः भ्रमन्ति स्म । अन्यत्र वनेषु कान्तारेषु प्रकृष्टमदा मधुपा मत्तभ्रमराः आरात्सर्वतः सञ्चेरुः इति वसन्तपक्षे । अत्र कुमार्याः पक्षे प्रथमार्तवोत्सववर्णनं प्राकरणिकं वस्तु । श्लेषोत्थापितं वसन्तवर्णनमप्यसंबद्धं मा भूदिति कुमारीवसन्तयोः उपमानोपमेयभावः कल्प्यते । तदत्र कुमार्याः प्रथमार्तवोत्सवः वसन्तोत्सव इवेत्युपमालङ्कारध्वनिः । अथवा वसंतवर्णनस्यापि प्रस्तुतत्वेन ग्रहणे द्वयोरपि प्रकृतार्थगोचरत्वात् श्लेषमात्रमेवालंकारः ॥ ५३ ॥

**शुद्धां राजवधूमथैकदिवसे वृद्धाऽवरोधाङ्गना**
**देव्यादेशवशादुपेत्य विजने व्यज्ञापयत्प्रस्तुतम् ।**

वत्से हन्त निषेकमङ्गलदिनं मौहूर्तिकैर्निश्चितं
धन्यासि प्रियसङ्गमेन मुदिता गौरीव कीर्तिं भजेः ॥ ५४ ॥

शुद्धामिति । अथैकदिवसे वृद्धा अन्तःपुरे नियुक्ता स्त्री देव्यादेशवशाद् राज्ञ्या समाज्ञप्ता शुद्धां ऋतुस्नातां राजवधूं मीरां विजने उपेत्य एकाकिनीं प्राप्य व्यज्ञापयत् । तदेवाह—हन्तेति हर्षे, वत्से, मौहूर्तिकैः दैवज्ञैः निषेकमङ्गलदिनं निषेकस्य त्वदीयगर्भाधानमहोत्सवस्य मङ्गलदिनं निश्चितं भवतीति शेषः । अत एव त्वं धन्यासि । प्रियसङ्गमेन शिवप्राप्त्या मुदिता गौरीव त्वमपि वल्लभसंगमेन कीर्तिं भजेः यशः प्राप्नुहि ॥ उपमा ॥ ५४ ॥

श्रुत्वा प्रस्तुतवादिनीमवचना तस्थौ च भूपेन्द्रजा
मत्वा तामतिलज्जितामतितरामानन्दिता किङ्करी ।
शय्यागारपरिष्कृतिं मनसिजप्रोद्दीपनीं यत्नतः
कन्यान्तःपुरमण्डपे रचयितुं चारब्ध कौशल्यभाक् ॥ ५५ ॥

श्रुत्वेति । भूपेन्द्रजा मीरा प्रस्तुतवादिनीं भविष्यमाणशुभकार्यनिवेदिकां श्रुत्वा अवचना निरुत्तरा तस्थौ । किङ्करी वृद्धा स्त्री तां मीरां अतिलज्जितां मत्वा अतितरामानन्दिता भृशं जहर्ष । किं च कौशल्यभाक् तत्तत्प्रसाधनकुशला सा स्त्री कन्यान्तःपुरमण्डपे कन्यागृहशालायां मनसिजप्रोद्दीपनीं कामोद्दीपनानुकूलां शय्यागारपरिष्कृतिं शयनगृहस्य अलङ्करणं यत्नतः आदरेण रचयितुं आरब्ध च ॥ अत्र समुच्चयालङ्कारः । चकारद्वयेन क्रियाद्वयस्य यौगपद्यद्योतनात् ॥ ५५ ॥

नानादिव्यसुगन्धिवस्तुभरितं चित्रैर्वितानैर्वृतं
जातीचम्पकमल्लिकादिसुमनःसम्भारसम्भूषितम् ।
शुभ्रप्रच्छदहंसतूलशयनं रत्नप्रभाभास्वरं
शय्यागारमभात् क्षणाद्रतिपतेः क्रीडानिकुञ्जोपमम् ॥ ५६ ॥

नानेति । तत्परिष्करणं वर्णयति—शय्यागारं क्षणादचिरेणैव रतिपतेः मदनस्य क्रीडानिकुञ्जोपमं केलिलताभवनसदृशम् अभात् प्रचकाशे । कीदृशम् । नानादिव्यसुगन्धिवस्तुभरितं विविधैर्लोकोत्तरैः शोभनगंधयुक्तैः वस्तुभिः पूर्णम् । पुनः कीदृशम् । चित्रैर्वितानैर्नानावर्णरञ्जितैः उपरितनावरणैर्वृतम् । पुनः कीदृशम् । जातीचम्पकमल्लिकादिसुमनःसंभारसंभूषितम् । जातीचम्पकमल्लिकादीनां सुमनसां पुष्पाणां संभारेण भूषितं सम्यगलङ्कृतम् । पुनः कीदृशम् । शुभ्रप्रच्छदहंसतूलशयनं शुभ्रो धवलः प्रच्छदः शय्यातलपटः यस्य तत् तादृशं हंसानां तूलैः कार्पासैः निर्मितं शयनं यस्मिन् तत् । किं च । रत्नप्रभाभास्वरं रत्नानां विविधमणीनां कान्तिभिरुज्ज्वलम् । उपमालंकारः ॥ ५६ ॥

गर्भाधानविधेर्महोत्सवदिने चित्रध्वजैर्मण्डितं
रेजे रञ्जितलोचनं पुरवरं सानन्दसर्वप्रजम् ।
भूरिद्रव्यसमर्चितद्विजवराशीर्भिः प्रतिध्वानितं
सङ्गीतस्वरमाधुरीपरवशं निष्पन्दगोष्ठीशतम् ॥ ५७ ॥

**गर्भेति** । गर्भाधानविधेः निषेकप्रस्तुतस्य महोत्सवदिने पुरवरं राजधानी **रेजे बभौ** । कीदृशम् । चित्रध्वजैर्नानावर्णक्रियाचातुर्यविशिष्टपताकाभिः मण्डितमलङ्कृतं रञ्जितलोचनमतीव दर्शनीयं सानन्दसर्वप्रजं सानन्दाः सर्वाः प्रजा यस्मिन् तत् । भूरिद्रव्यैः प्रभूतदक्षिणाभिः समर्चितानां सत्कृतानां द्विजवराणां ब्राह्मणोत्तमानामाशीर्भिर्मङ्गलवचनैः प्रतिध्वानितं संजातप्रतिरवम् । आशिषां अतीव तारस्वरेण उच्चार्यमाणत्वात् । अत्र रसश्च हास्यो व्यज्यते । यथा यथा अधिकाधिकां दक्षिणां लभन्ते ब्राह्मणास्तथा तथा उच्चैरुच्चैराशिषो वदन्तीति । द्विजा आलम्बनविभावः तारतारस्वरः उद्दीपनविभावः श्रोतॄणामक्षिसंकोचस्मेरमुखत्वादिरनुभावः गौरवरक्षणाय श्रोतृभिः स्वाकारगोपनम् अवहित्थाख्यः सञ्चारिभावः । हासः स्थायी ॥ संगीतस्वरमाधुरीपरवशं संगीतस्य सर्वतः प्रवर्तमानस्य स्वरमाधुर्यात् परवशम् अत एव निष्पन्दगोष्ठीशतं निश्चलं गोष्ठीनां जनमेलकानां शतं यस्मिन् तत् ॥ ५७ ॥

तद्रात्रौ परिपूर्णचन्द्रविसरद्दुग्धप्रवाहोपम-
ज्योत्स्नापूरपरिप्लुता समजनि क्रीडावनी भूपतेः ।
येन प्रापुरुपेतबन्धुविबुधा विस्मृत्य तात्कालिकं
क्षीरोदार्णवकेलिमुग्धमनसः संमोदमन्यादृशम् ॥ ५८ ॥

**तद्रात्राविति** । तद्रात्रौ तस्यां महोत्सवस्य रात्रौ भूपतेः क्रीडावनी क्रीडोद्यानं परिपूर्णचन्द्रस्य विसरन्त्याः समन्ताद् व्याप्नुवत्याः दुग्धप्रवाहोपमाया ज्योत्स्नायाः चन्द्रिकायाः पूरेण परिप्लुता सर्वतो व्याप्ता समजनि संजाता । येन कारणेन उपेता मिलिता बान्धवा एव विबुधाः सुराः तात्कालिकं तदानीन्तनं क्रीडाविनोदविहारादिकं विस्मृत्य क्षीरोदार्णवकेलिमुग्धमनसः क्षीरसागरे केल्या क्रीडनेनेव मुग्धानि परवशीभूतानि मनांसि येषां ते तादृशाः सन्तः अन्यादृशम् अनुपमं संमोदम् आनंदं प्रापुः ॥ उपमा-भ्रान्तिमांश्च भ्रान्तिमदलङ्कारेण च ज्योत्स्नायां विहारः क्षीरोदार्णवकेलिरिवेत्युपमालङ्कारध्वनिः ॥ ५८ ॥

उद्याने प्रचलन्ति विस्मयकरा भव्यप्रयोगोत्सवा
अग्निक्रीडनमाचरन्ति तनुते भूरीन्द्रजालादिकम् ।
नृत्यन्ति प्रकिरन्ति सौरभलसत्पुष्पोदकं सर्वतो
दक्षाः साहसिका महेन्द्रकुशलो वाराङ्गनाः किङ्कराः ॥ ५९ ॥

**उद्यान इति ।** उद्याने पूर्वोक्ते विस्मयकरा अद्भुता भव्यप्रयोगोत्सवा मङ्गलक्रिया-विशेषाणां उत्सवाः प्रचलन्ति प्रचेलुरित्यर्थः । तथा हि । दक्षाः क्रियापटवः साहसिकाः साहसकर्मकर्तारोऽभ्युत्पादकद्रव्यैः खेलनम् आचरन्ति चक्रुः । महेन्द्रकुशलो महेन्द्रजाल-विद्यायां निपुणो भूरीन्द्रजालादिकं विविधानैन्द्रजालिकप्रयोगान् तनुते करोति स्म । वाराङ्गना नृत्यन्ति स्म । किङ्कराः सर्वतः सौरभलसत् पुष्पोदकं परिमलेन लसतां पुष्पाणा-मुदकं सर्वतः प्रकिरन्ति सिञ्चन्ति स्म । अत्र यथासंख्यालङ्कारः ॥ ५९ ॥

**मृष्टान्नं परिभुज्य बन्धुनिकरो यावत्प्रमोमुद्यते**
**तावत्पञ्चशराग्निना नृपसुतस्तीव्रेण दन्दह्यते ।**
**मीरा नन्दसुतं तदेकहृदयाऽऽनन्देन दाध्यायते**
**वैषम्यं रसयोरिदं सहचरी सञ्चिन्त्य दोदूयते ॥ ६० ॥**

**मृष्टान्नमिति ।** यावद्बन्धुनिकरो बान्धवानां समूहो मृष्टान्नं सुप्रणीतमाहारं परिभुज्य सम्यग् भुक्त्वा प्रमोमुद्यते नितरां हृष्यति स्म तावन्नृपसुतस्तीव्रेण पञ्चशराग्निना मदनतापेन दन्दह्यते अतीव तप्यते स्म । मीरा नन्दसुतं श्रीकृष्णं तदेकहृदया तन्मयी-भूतचित्ता आनन्देन दाध्यायते अतिशयेन ध्यायति स्म । सहचरी मीराया धात्री रसयोरिदं शृङ्गारशान्तिरूपयोरिदं वैषम्यमननुरूपतां सञ्चिन्त्य पुनः पुनश्चिन्तयन्ती दोदूयते नितरां दुःखिताऽभूत् ॥ ६० ॥

**निर्याते निखिलेऽपि बन्धुनिवहे प्राप्ते निशीथे जगत्**
**निःशेषं सुखनिद्रया हृतमभूद्रेजे प्रशान्तिः परा ।**
**शय्यागारमगात्तदा शशिकरैराभास्यमानं युवा**
**सोत्कण्ठः परिकम्पमानहृदयः सर्वाङ्गरोमाञ्चितः ॥ ६१ ॥**

**निर्यात इति ।** निर्यातेऽपि बन्धुनिवहे स्वस्वगृहं प्रस्थिते सति निशीथे अर्धरात्रे प्राप्ते सति । निःशेषं जगत् समस्तो लोकः सुखनिद्रया हृतमभूत् परवशीकृतमासीत् । परा प्रशान्तिरेकान्तनिःशब्दता रेजे विलसति स्म । तदा तत्कालं युवा सोत्कण्ठः उत्कण्ठितः परिकम्पमानहृदयः सर्वाङ्गरोमाञ्चितो भूत्वा शशिकरैः चन्द्रकिरणैः आभास्यमानं ईषत्प्रकाश्यमानं शय्यागारं दम्पत्योः कल्पितं शय्यागृहमगाद्गतवान् । अत्र विप्र-लम्भाख्यः शृङ्गारः ॥ ६१ ॥

**शून्यं वासगृहं विलोक्य तरुणः किञ्चिद्विषण्णान्तरः**
**क्वाप्यत्रैव भवेद्विनोदरसिका नूनं निगूढा प्रिया ।**
**ध्यायन्नेवमुपोढमन्मथभरो तामन्वियेषान्तरे**
**सर्वत्रापि वृथा ततः स शनकैर्देवालयं प्राविशत् ॥ ६२ ॥**

**शून्यमिति** । तरुणः वासगृहं शय्यागृहं शून्यं मीरया रहितं विलोक्य किञ्चिद्विषण्णान्तरः ईषत्खिन्नमानसः सन् । अत्र विषादो भावः । विनोदरसिका प्रिया नूनं क्वापि निगूढा । अत्र वितर्को भावः । एवं वितर्कपूर्वा इति चिन्ता । उपोढमन्मथभरः संजातकामोद्रेकः तामन्तरे शयनगृहाभ्यन्तरे सर्वत्रापि वृथा अन्वियेष अन्विष्टवानित्यौत्सुक्यमत्र भावः । ततः प्रयत्नवैयर्थ्यानन्तरं स तरुणः शनकैः मन्दं मन्दं देवालयं प्राविशत् । अत्रैव तया भवितव्यमित्यवधारणस्य गम्यतया मतिरत्र भावः । इत्थं विषादवितर्कचिन्तौत्सुक्यमतीनां भावानां शबलता । रतेः स्थायीभावस्यांगभूतत्वाद् भावशबलतालंकारः ॥ ६२ ॥

**तत्र स्थण्डिलशायिनीं नृपसुतां श्रीकृष्णमूर्तेः पुरः**
**प्राणेशीमवलोक्य विस्मितमना मुग्धो बभूव क्षणम् ।**
**सेयं व्याजविनिद्रितेति कलयन् प्रस्वेदकम्पाकुलो**
**निःशब्दं स विनम्य चन्द्ररुचिरं तस्याश्चुचुंबाननम् ॥ ६३ ॥**

**तत्रेति** । तत्र देवालये प्राणेशीं प्रियां नृपसुतां मीरां स्थण्डिलशायिनीं अनावृतभूतले निद्राणां महत्युपभोगकाले सम्प्राप्तेऽपि विरक्तेव तपस्विनी कथमियं भूतले शयितास्तीति विस्मयाविष्टचेताः क्षणं मुग्धः प्रतिपत्तिमूढो बभूव । अत्र जडताख्यो भावः । सेयं मीरा व्याजविनिद्रितेति व्यलीकसुप्तेति कलयन् भावयन् स प्रस्वेदकम्पाकुलो निःशब्दं नीरवं विनम्य अवनतो भूत्वा तस्याः चंद्रमिव रमणीयं आननं चुचुंब ॥ अत्र संभोगशृङ्गाराख्यो रसः । मीरा आलंबनविभावः । व्याजविनिद्रितेति भावना उद्दीपनम् । कम्पस्वेदचुंबनानि अनुभावः । जडता संचारी ॥ ६३ ॥

**स्पृष्टा तेन किल प्रबोधमगमत्सूर्यांशुनेवाब्जिनी**
**द्रागुत्थाय कुमारपादपतिता प्रोवाच मीरा ततः ।**
**बाल्यादेव मया वृतो यदुपतिः प्राणेश्वरः शाश्वतो**
**नान्यः कोऽपि पतिर्ममास्ति भुवने तत्क्षम्यतामार्य भोः ॥६४॥**

**स्पृष्टेति** । सूर्यांशुना सूर्यकरेण स्पृष्टा अब्जिनीव कमललता यथा प्रबोधं विकासं प्राप्नोति किल तथा तेन कुमारेण स्पृष्टा मीरा प्रबोधं निद्रानिवृत्तिं अगमत् प्राप । अत्र किलेति व्यलीके । उपमानवाक्यार्थप्रतीयमानस्य अनुरागस्य मीरायां अभावात् । अत्र प्रबोधनक्रियारूपसामान्यधर्मस्य श्लिष्टत्वात् श्लेषानुप्राणिता पूर्णोपमा । ततः द्राक् झटिति उत्थाय प्रोवाच । तदेवाह—भोः आर्य, बाल्यादेव श्रीकृष्णः मया शाश्वतो जन्मान्तरेऽप्यनपायी प्राणेश्वरः प्रियतमः वृतः स्वीकृतः । तदत एव न कोऽपि भुवने मम अन्यः पतिरस्ति क्षम्यताम् । मम प्रातिकूल्यं मर्षणीयम् ॥ ६४ ॥

**अद्योन्मुद्रितकैतवादिकुसुमामोदः सरीसृप्यते**
**कान्तेनामलचन्द्रिकाम्बरधरा रात्रिर्जरीहृष्यते ।**
**सर्वत्रापि वसन्तमञ्जुलतरा लक्ष्मीर्जरीजृम्भ्यते**
**वृद्धा वीक्ष्य विरागिणीं वरवधूं हाहेति रोरुद्यते ॥ ६५ ॥**

**अद्येति** । अद्य इदानीं उन्मुद्रितकैतवादिकुसुमामोदः विकसितानां कुमुदप्रमुखानां पुष्पाणां गाढः परिमलः सरीसृप्यते अतिशयेन प्रसरति । सर्वत्रापि वसन्तमञ्जुलतरा वसन्ते स्वभावसिद्धा अतीवरमणीया लक्ष्मीः शोभा जरीजृम्भ्यते नितान्तं वर्धते । इति कामोद्दीपनकालेऽपि मीरा विरक्ता तिष्ठतीति भावः । रात्रिः अम्बरधरा निर्मलज्योत्स्ना-रूपवस्त्रधारिणी कान्तेन वल्लभेन चन्द्रेण जरीहृष्यते भृशं मोदते । अचेतनाया अपि रात्रेः कान्तसंनिधौ प्रेमातिशये व्यज्यमानेऽपि इयं मीरा पतिपराङ्मुखी तिष्ठतीति भावः । इत्थं वृद्धा वरवधूं उत्तमांगनां मीरां वीक्ष्य हा हेति महता दुःखेन रोरुद्यते नितान्तं रोदिति । अत्र कारणसामग्र्यां सत्यामपि कार्याभावः इति विभावनालंकारः ॥ ६५ ॥

**तद्वृत्तं बहुलीभवन्नृपगृहे श्रुत्वा कुमारस्वसा**
**मीरायाः सुचरित्रमाविलयितुं बद्धादरा व्याहरत् ।**
**भार्या ते निशि कामुकैः सह रहो निःशङ्कमाचेष्टते**
**भ्रातः सत्कुलमस्मदीयमचिरान्नश्येदतो जागृहि ॥ ६६ ॥**

**तद्वृत्तमिति** । तद्वृत्तं मीरायाः पतिवैमुख्यवृत्तान्तं नृपगृहे राजगृहे बहुलीभवद् भूयसा प्रचरितं कुमारस्वसा मीराया ननान्दा श्रुत्वा मीरायाः सुचरित्रं साधुप्रवृत्तिशीलताम् आविलयितुं दूषयितुम् अभिनिविष्टा सती व्याहरद् उवाच । तत्प्रकारमाह—भ्रातस्ते तव भार्या निशि रात्रौ कामुकैर्विटैः सह रहः एकान्ते निःशङ्कं निर्भयतया आचेष्टते व्यव-हरति । अत एव अस्मत्कुलम् अचिरात् तया कारणभूतया नश्येद्विनष्टं भवेत् । जागृहि तत्र अप्रमत्तो भव । अत्र जागृहीति वाक्यार्थस्य मीरादूषणवाक्यार्थहेतुकत्वात् काव्य-लिङ्गम् ॥ ६६ ॥

**ऊचे श्रोत्रनिपीतवाक्यगरलो मोमुह्यमानो युवा**
**धिक् तां धर्मपतिद्रुघामधमजां धिग् रत्नसिंहं च तम् ।**
**धिक् पुंस्त्वं मम धिक् पितुः प्रभुपदं धिक् सार्वभौमाश्रयं**
**धूर्ताश्लिष्टविदुष्टदुर्वपुरदः खड्गोऽयमाश्लिष्यतु ॥ ६७ ॥**

**ऊच इति** । युवा राजपुत्रः श्रोत्रनिपीतवाक्यगरलः श्रोत्राभ्यां निपीतं वाक्यं भगिन्या कथितमेव गरलं विषं येन सः । अत एव मोमुह्यमानो अतीव मुह्यन् विवेक-शून्यः सन्नित्यर्थः । ऊचे वक्ष्यमाणरीत्या बभाषे । तदेवाह—धर्मपतिद्रुघाम् धर्मपतये

धर्मार्थं तत्पाणिं गृहीतवते मह्यं द्रुह्यन्तीम् अधमजां नीचगर्भोत्पन्नां तां नाम्नापि ग्रहीतुमयोग्यां मीरां धिक् । सा निन्दनीयेत्यर्थः । तं रत्नसिंहं च तत्पितरमपि धिक् । वञ्चकत्वात् । मम पुंस्त्वं पुरुषभावं धिक् । निजस्त्रीकृतवैमुख्यात् । पितुः प्रभुपदं धिक् । पितू राजत्वं धिक् । अभीष्टसंपादनाभावात् । सार्वभौमस्य चक्रवर्तिनः आश्रयमस्मद् आलंबनं धिक् । परंपरया तत्संबन्धस्यापि वैयर्थ्यात् । तस्माद् अयं खड्गो मदीयहस्तगतः अदः तत् मीरासंबन्धीत्यर्थः । धूर्ताश्लिष्टविदुष्टदुर्वपुः धूर्तैः कामुकैः आश्लिष्टं आलिङ्गितं अत एव विदुष्टं विशेषेण दूषणीयं दुर्वपुः तुच्छं शरीरम् आश्लिष्यतु आलिंगतु । विच्छिनत्तु इति भावः । अत्र रौद्रो रसः । शत्रुभूता मीरा आलम्बनम् । तस्यां धूर्ताश्लिष्टत्वभावना उद्दीपनम् । सर्वधिक्कारः अनुभावः । मोहामर्षोग्रताः संचारिणः । क्रोधः स्थायी । मोमुह्यमानत्वस्य निपीतगरलत्वं हेतुरितिपदार्थहेतुकं काव्यलिङ्गम् । वाक्यगरलमिति रूपकम् । खड्गाश्लेषस्य धिक्कारवाक्यार्थहेतुकत्वाद् वाक्यार्थहेतुकं काव्यलिङ्गम्, अतः संसृष्टिः । धूर्ताश्लिष्टदेहस्य मदीयखड्गाश्लेषो भवतु इत्यनेन पतिद्रोहिण्यः पतिभिरस्पृश्यास्तासां च वध एव दण्ड इति वस्तु व्यज्यते । तस्मादत्र वस्तुना वस्तुध्वनिः ॥ ६७ ॥

**इत्युक्त्वा भगिनीयुतः स तरुणो निस्त्रिंशपाणिर्ययौ**
**मीरावासगृहं निशीथसमये क्रोधानलेन ज्वलन् ।**
**रुन्धानां विनिपात्य तत्सहचरीं स्फूर्जद्घनोद्गर्जनो**
**निर्यत्फेनमुखस्तदर्चनगृहद्वारं प्रपेदे द्रुतम् ॥ ६८ ॥**

**इत्युक्त्वेति** । इत्युक्त्वा स तरुणो भगिनीयुतः सन् निस्त्रिंशपाणिः खड्गमादाय क्रोधानलेन क्रोधाग्निना ज्वलन् तप्यमानः निशीथसमये मध्यरात्रे मीरावासगृहं मीरायाः शयनागारं ययौ जगाम । रुन्धानां तद्गमनं प्रतिबध्नतीं तत्सहचरीं मीराया धात्रीं विनिपात्य अधःपतितां कृत्वा स्फूर्जद्घनोद्गर्जनः स्फूर्जतः स्तनतः घनस्य मेघस्येव उद्गर्जनं उच्चैः गर्जनं यस्य सः । निर्यत्फेनमुखः निर्यन् निर्गच्छन् फेनः लाला तत् तादृशं मुखं यस्य सः । तदर्चनगृहद्वारं मीरायाः पूजागृहद्वारं द्रुतं प्रपेदे वेगेन प्राप्तः । अत्रापि रौद्रः । विभावानुभावादयः स्वयमूह्याः ॥ ६८ ॥

**तत्र द्वारि मुहूर्तमाकुलमनाः शुश्राव सोऽभ्यन्तरात्**
**पुंसा संलपनं स्वसुः कुवचने संप्रत्ययापादकम् ।**
**पादेनाथ कपाटमुत्कटरुषा कृत्वा समुद्घाटितं**
**मीरा शोणिततृष्णयान्तरविशत् प्रोद्यम्य निस्त्रिंशकम् ॥ ६९ ॥**

**तत्रेति** । तत्र स तरुणो देवालयस्य द्वारि द्वारबहिर्देशे मुहूर्तं क्षणं स्थित्वेति शेषः । अभ्यन्तरात् स्वसुः भगिन्याः कुवचने मीरायाः कामुकसंगरूपे संप्रत्ययापादकं संप्रत्ययस्य विश्वासदार्ढ्यस्य आपादकं जनकं पुंसा केनापि पुरुषेण सह संलपनं मीरया कृतं संभा-

षणम् आकुलमनाः पर्याकुलहृदयः सन् शुश्राव श्रुतवान् । अथ श्रवणानन्तरम् उत्कटरुषा महता क्रोधेन कपाटं द्वारफलकं पादेन समुद्घाटितं कृत्वा बलाद् अपावृत्य मीराया रक्तपिपासया निस्त्रिंशकं प्रोद्यम्य खड्गम् उत्थाप्य अन्तः कोष्ठाभ्यन्तरम् अविशत् । अत्रापि पूर्ववत् रौद्रो रसः ॥ ६९ ॥

**यावद्धावति हन्तुमात्मरमणीमानन्दमग्नान्तरा-**
**मालापानिव कुर्वतीं भगवता सूक्तैः सुधास्यन्दिभिः ।**
**तावद्भ्रश्यति विश्लथः करतलात् खड्गः स्वयं भूतले**
**भूमीशस्य सुतोऽपि शून्यनयनः स्तब्धस्थितो वीक्षते ॥ ७० ॥**

**यावदिति** । भगवता सह श्रीकृष्णेन सह सुधास्यन्दिभिः अमृतवर्षिभिः सूक्तैः सुभाषणैः आलापान् नानालापप्रसङ्गान् कुर्वतीमिव स्थितामिति शेषः । इत्यनेन तत्कृत-भगवत्प्रार्थनायाः पुरुषान्तरेण संभाषणमिव श्रूयमाणत्वं सूच्यते । आनन्दमग्नां सानन्द-हृदयाम् आत्मरमणीं निजभार्यां मीरां हन्तुं यावद् धावति वेगेन पुरश्चलति तावत् खड्गस्तदीयहस्तगतः विश्लथः शिथिलबन्धनः सन् करतलाद् भूतले स्वयं भ्रश्यति पतितमभूदित्यर्थः । भूमीशस्य सुतोऽपि कुमारश्च शून्यनयनः लक्ष्यविहीननेत्रः स्तब्ध-स्थितः स्तंभेन निश्चलः भूत्वा वीक्षते पश्यति स्म । अत्र प्रथमार्धे रौद्रः द्वितीयार्धे अद्भुतः द्वयोः परस्परविरोधाभावाद् एकत्र समावेशः ॥ ७० ॥

**प्रत्यापन्नमतौ विकर्षति वधूं वादस्तयोरुत्थितः**
**कस्त्वामालपति स्म मत्प्रियतमः कुत्रास्त्यसौ मत्पुरः ।**
**निर्जीवः स किलास्ति जीवतितरां किं मौनमालम्बते**
**वक्ष्यत्येव कुमार मां तदधुना संभाषयैनं पुनः ॥ ७१ ॥**

**प्रत्यापन्नेति** । प्रत्यापन्नमतौ प्रकृतिमापन्ने राजकुमारे वधूं मीरां विकर्षति संचाल्य संबोधयति सति तयोः मीराकुमारयोः वादः प्रश्नोत्तररूपः संवादः उत्थितः समजनि । तदेवाह—कस्त्वामिति । स्पष्टम् ॥ ७१ ॥

**इत्युक्त्वा समबोधयद्यदुपतिं प्राणेश संलप्यतां**
**दिव्यां वाचमुदीरय प्रिय पुनः किं भाषितुं नेहसे ।**
**आर्यालोकय मन्दहासमहहा दृष्टप्रनष्टः क्षणा-**
**न्नान्यस्यास्मि तवैव मा त्यज विभो तिष्ठ क्षणं हा गतः ॥७२॥**

**इत्युक्तेति** । इत्युक्त्वा एवं राजकुमारेण पृष्टा सा यदुपतिं श्रीकृष्णं समबोधयत् आभाषयत् । तत्प्रकारमाह—हे प्रिय प्राणनाथ, संलप्यतां मया सह आलापं कुरु । दिव्यां लोकोत्तरां वाचं गिरम् उदीरय । इति अत्र समानार्थकवाक्यद्वयेन तदौत्सुक्यं व्यज्यते ।

हे प्रिय, किं पुनर्भाषितुं नेच्छसीति शङ्का । आर्य हे राजकुमार, मन्दहासं श्रीकृष्णमूर्तेः दृश्यमानं स्मितमालोक्य इति हर्षः । अहहा इति दुःखे । दृष्टप्रनष्टः क्षणात् पूर्वं दृष्टः पश्चात्प्रनष्टः अदर्शनं गतः क्षणादिति चिन्ता । नान्यस्यास्मि अहं अन्यस्य न । तवैवास्मि । मा त्यज विभो क्षणं तिष्ठ इति दैन्यम् । हा गतः इति विषादः । एवं औत्सुक्यशङ्काहर्षचिन्तादैन्यविषादानां षण्णां भावानामेकत्र समावेशाद् भावशबलता ॥ ७२ ॥

**संलापं च मुदा शुचाऽथ रुदितं पर्यायतः कुर्वती**
**न प्राप्य प्रतिवाचमात्मदयिताद् दीना सकम्पा स्थिता ।**
**सद्यः कान्तमिवोत्सुका रमयितुं तच्चेतनापि क्षणं**
**चैतन्याधिपतिं गता गिरिधरं कन्याप्यवन्यास्तलम् ॥ ७३ ॥**

**संलापमिति** । मुदा हर्षेण संलापं संभाषणं च अथ शुचा रुदितं पर्यायतः अनुक्रमेण कुर्वती पूर्वोक्तरीत्या हर्षं च शोकं च कुर्वाणा आत्मदयितान्निजवल्लभाद् यदुपतेः प्रतिवाचं प्रत्युत्तरं न प्राप्य अलब्ध्वा दीना अनौजस्यं प्राप्ता सकम्पा कम्पमाना स्थिता तस्थौ । तच्चेतनापि तस्या मीरायाः संज्ञापि कान्तं वल्लभं चैतन्याधिपतिं सर्वचेतनानामीश्वरं गिरिधरं श्रीकृष्णं सद्यः अविम्लबेनैव रमयितुं संगम्य प्रीणयितुम् उत्सुकेव क्षणं स्वल्पकालं गता इत्यनेन पर्यायोक्तेन मूर्च्छा व्यज्यते । अत एव पर्यायोक्त्यलङ्कारः । रमयितुम् उत्सुकेवेति हेतूत्प्रेक्षा च । कन्यापि अवन्यास्तलं भूतलं गतेति पूर्वेणान्वयः । अत्र चेतना चैतन्याधिपतिं गता कन्या च भूतलं गतेति क्रमेण मूर्च्छायाः पतनस्य च भङ्ग्यन्तरेण प्रतिपादनात्पर्यायोक्तमलङ्कारः । चेतनापि चैतन्याधिपतिं गता कन्यापि भूतलं गतेति अपि द्वयान्मूर्च्छापतनयोर्यौगपद्यद्योतनात्समुच्चयालङ्कारः । अपिः समुच्चये ॥

कान्तं रमयितुमुत्सुकेवेत्युत्प्रेक्षालङ्कारः । चेतना कान्तं गता कन्या भूमितलमिति एकक्रियाभिसम्बन्धात् मूर्च्छापतनयोर्द्वयोरपि प्रस्तुतत्वाच्च तुल्ययोगितालङ्कारः । चेतना चैतन्याधिपतिं गतेति लिङ्गवैशिष्ट्यान्नायकयोरप्रस्तुतवृत्तान्तस्फोरणात् समासोक्तिः । द्वितीयार्धप्रतिपादितमूर्च्छापतनयोः प्रथमार्धगतप्रतिवचनालाभरूपवाक्यार्थहेतुकत्वात् काव्यलिङ्गमलङ्कारः ॥ ७३ ॥

अथ मूर्च्छापतितायाः मीरायाः किं संजातमिति वर्णयति ।

**तामुद्धर्तुमथ स्वसा व्यवसिता केनापि रुद्धाऽब्रवीत्**
**साक्षात्पावनता नराकृतिरियं स्पृश्या न सा पापया ।**
**भ्रातुः श्रोत्रयुगं मयैव भरितं दुर्वाक्यहालाहलै-**
**रित्थं सानुशयां विलोक्य भगिनीं नष्टः कुमारस्ततः ॥ ७४ ॥**

**तामिति** । अथ तदनंतरं स्वसा कुमारस्य भगिनी तां मीराम् उद्धर्तुम् उत्थापयितुं व्यवसिता कृतप्रयत्ना केनापि कयाप्यदृश्यव्यक्त्या रुद्धा निवारिता सती अब्रवीत् जगाद ।

तत्प्रकारमाह—इयं नराकृतिः मनुष्यरूपधारिणी साक्षात्पावनता पवित्रता भवतीति शेषः । अत एव सा पापया मया न स्पृश्या स्प्रष्टुमनर्हा । स्वसा किं पापं कृतमित्याह—कुमारस्य श्रोत्रयुगं कर्णयुगलं दुर्वाक्यहालाहलैः दुर्वाक्यानि मिथ्यापवादा एव हालाहलानि महाविषाणि तैः मयैव भरितं पूरितमासीत् । अत एव अहं पापिष्ठास्मीत्यर्थः । एवकारेण स्वेतरव्यवच्छेदो व्यज्यते । इत्थं सानुशयां पश्चात्तापेन युक्तां भगिनीं विलोक्य कुमारस्ततः तत्प्रदेशान्नष्टो निर्गतोऽभूत् । इयं नराकृतिः साक्षात्पावनता इत्यतिशयोक्तिः ॥ ७४ ॥

**कः शङ्केत सुशुभ्रतां हिमगिरेः श्यामायितस्याम्बुदै-**
**स्तेजःपुञ्जकरालतां दिनपतेर्ग्रस्तस्य वा राहुणा ।**
**किं चित्रं यदि राजसूनुरनघां बुध्वा वधूं दूषितां**
**देवागारमकारयत्सुरुचिरं तस्यै बहिः स्वालयात् ॥ ७५ ॥**

**कः शङ्केतेति ।** अम्बुदैः मेघैः श्यामायितस्य नीलवर्णांकृतस्य हिमगिरेः हिमालयपर्वतस्य सुशुभ्रतां नितान्तधावल्यं कः शङ्केत कः संदिहीत । न कोऽपि संदिग्धे इत्यर्थः । वा अथवा राहुणा तमोग्रहेण ग्रस्तस्य गिलितस्य दिनपतेः सूर्यस्य तेजःपुञ्जकरालतां तेजःसमूहेन पूर्णतां कः शङ्केतेति पूर्वेणान्वयः । राजसूनुः दूषितां मिथ्यापवादपात्रीकृतां वधूं मीराम् अनघां निष्पापां बुध्वा ज्ञात्वा तस्यै मीरायै स्वालयाद् बहिः निजमन्दिरबाह्ये सुरुचिरम् अतीवरमणीयं देवस्थानम् अकारयद् यदि कारितवांश्चेत् किं चित्रं न किञ्चिद् आश्चर्यमिति भावः । अत्र प्रथमार्धगतयोर्वाक्यार्थयोः अप्रस्तुतयोः शङ्केतेति एकक्रियाभिसंबन्धात् तुल्ययोगितालङ्कारः । किं च । मृषा दूषितापि वधूरनघैव स्थिता इत्यस्य दृष्टान्तरूपेण नीलाम्बुदच्छन्नोऽपि हिमगिरिः स्वरूपतः शुभ्र एव तिष्ठतीति सदृशस्य वस्तुनः प्रतिबिम्बनाद् दृष्टान्तालङ्कारः ॥ एवं तयोर्द्वयोः सङ्करः ॥ ७५ ॥

**अत्रासौ नचिरात् स्नुषा नरपतेर्देवालये वासिता**
**पत्युर्यन्त्रणमन्तरा भगवतश्चक्रे सपर्यादिकम् ।**
**तामेनां परिवव्रुरर्चनविधौ दूरागताः साधवः**
**सूचीं लोहमणिर्यथा सुजनतां सौजन्यमाकर्षति ॥ ७६ ॥**

**अत्रेति ।** अत्र देवालये असौ स्नुषा मीरा नचिरात् शीघ्रमेव वासिता दत्तनिवासा । पत्युर्यन्त्रणमन्तरा निर्बन्धं विना भगवतः सपर्यादिकं पूजादिकं चक्रे करोति स्म । तामेनां भगवदुपासनापरायणां दूरागताः दूरदेशेभ्यः प्राप्ताः साधवः देवभक्ता अर्चनविधौ पूजनसमये परिवव्रुः परितः तस्थुः । एतत्समर्थनाय अर्थान्तरं न्यस्यति— लोहमणिः यथा सूचीम् आकर्षति तथा सौजन्यं सुजनताम् आकर्षति । विशेषस्य

सामान्येन समर्थनरूपः अर्थान्तरन्यासालङ्कारः । तदन्तर्गता च उपमा स्पष्टैव । तयोः संकरः ॥ ७६ ॥

**आमोदेन दिशो यशःसुमनसामस्याः सुवासीकृता**
**दूरात्प्रेक्षणकौतुकेन शतशस्तत्सन्निपेतुर्जनाः ।**
**तेष्वासीत्किल तानसेनसहितः संमिश्रितः सङ्कुले**
**श्रीमानक्बरसार्वभौमनृपतिर्भिक्षाकवेषं वहन् ॥ ७७ ॥**

**आमोदेनेति** । अस्याः मीरायाः यशःसुमनसां कीर्तिपुष्पाणाम् आमोदेन गाढपरिमलेन दिशः सर्वे देशाः सुवासीकृताः सुरभीकृताः बभूवुः इति शेषः । सा भक्तिमताम् अग्रगण्येति कीर्तिः सर्वतः प्रचलिताभूदिति भावः । रूपकम् । तत्तस्माद् जना लोकाः प्रेक्षणकौतुकेन दर्शनकुतूहलेन दूरात् शतशः बहुसंख्याकाः जनाः सन्निपेतुः संमिलिता बभूवुः । तेषु जनेषु मध्ये तानसेनाख्येन मन्त्रिणा समेतः संमिश्रितः सङ्कुले महाजनसंबाधे सम्यग् अलक्ष्यव्यक्तिकतया मिलितः भिक्षाकवेषं भिक्षुकस्य वेषं वहन् धारयन् श्रीमानक्बरः श्रीमान् अक्बरनामा सार्वभौमः चक्रवर्ती असौ नृपतिश्च आसीत् । किलेति ऐतिह्ये । एवमितिहासे प्रसिद्धम् इत्यर्थः ॥ ७७ ॥

**भक्त्यावेशविराजिनीं नृपसुतामालोक्य सोऽयं प्रभु-**
**स्त्यक्तस्वेतरधर्मविग्रहरतिर्निःपक्षपाती जने ।**
**तत्पादं प्रणिनंसुरात्मसुहृदा निर्भेदशङ्काजुषा**
**रुद्धोऽभूदथ सापि गीतिसुधया लोकानवर्षीच्चिरम् ॥ ७८ ॥**

**भक्त्येति** । त्यक्तस्वेतरधर्मविग्रहरतिः त्यक्ता स्वेषां यवनानाम् इतरेषां भारतीयानां च धर्मयोः विग्रहे मतवैषम्ये रतिः आसक्तिर्येन सः । सर्वमतानां समदर्शीत्यर्थः । जने निःपक्षपाती धर्मेण प्रवर्तमानः सोऽयं प्रभुः अक्बरनामा भक्त्या, भक्तेः आवेशेन उद्रेकेण विराजिनीं प्रकाशमानां नृपसुतां मीराम् आलोक्य दृष्ट्वा तत्पादं तस्याः पादौ प्रणिनंसुः नमस्कर्तुम् इच्छुः निर्भेदशङ्काजुषा निर्भेदस्य निजराजभावोद्घाटनस्य शङ्कां जुषत इति शङ्काजुट् तेन भीतिं प्राप्तेन आत्मसुहृदा निजमित्रेण तानसेनेन रुद्धोऽभूद् निवारितोऽभूत् । अथ सापि मीरा गीतिसुधया गानामृतेन चिरं लोकान् अवर्षीद् असिञ्चत् ॥ ७८ ॥

तदेव गीतं वस्तु प्रपञ्चयति ।

**माता मे जनकश्च बान्धवजनाः सर्वेऽपि दूरीकृता**
**नान्यः कोऽपि भुवि प्रियो गिरिधर त्वामन्तरेणास्ति मे ।**

संसारं व्यवधूय वीतविनया त्वामेव चिन्वत्यहं
दिष्ट्या दर्शनमद्भुतं तव विभो प्राप्तास्मि बाष्पाकुला ॥ ७९ ॥

**मातेति।** हे गिरिधर, मम माता जनकः बान्धवाश्च सर्वेऽपि दूरीकृता तेष्वादरो मया त्यक्त इति भावः। भुवि त्वामन्तरेण त्वां विना अन्यः कोऽपि मे प्रियः नास्ति। अत एवाहं संसारं सांसारिकान् भोगान् व्यवधूय निरस्य वीतविनया वीतः त्यक्तः विनयः स्त्रीसहजा गुरुपत्यादिषु नम्रभावः यया सा। ईदृशी भूत्वा त्वामेव चिन्वती त्वामेव अन्वेषयन्ती दिष्ट्या मद्भाग्यवशाद् हे विभो सर्वव्यापिन्, तव अद्भुतम् आश्चर्यकरं दर्शनं बाष्पाकुला आनन्दपारवश्याद् बाष्पं मुञ्चती प्राप्तास्मि लब्धवत्यस्मि ॥ ७९ ॥

नित्यं प्रेमलतामपोषयमहं ध्यानाम्बुधाराशतै-
र्नित्यं मत्परिरक्षकोऽसि भगवंस्त्वन्नाम मे हृद्गतम्।
एषाहं तव किङ्करी तनुमनःप्राणान् समर्प्य स्थिता
कौलीनैरथ किं मृषा प्रलपितैर्नाम स्मरन्त्यास्तव ॥ ८० ॥

**नित्यमिति।** भगवन्, प्रेमलतां त्वयि यः प्रेमा भक्तिः सा एव लता तां नित्यमहं ध्यानाम्बुधाराशतैः ध्यानमेव अम्बु जलं भक्तेर्जीवकत्वात् तस्य धाराणां शतैः नित्यमपोषयम्। निरन्तरध्यानेन त्वयि भक्तेः परमोत्कर्षं प्रापम् इति भावः। अत्र सांगं रूपकम्। नित्यं सर्वदा मत्परिरक्षकोऽसि मां पालयसि। तव नामरूपविशिष्टां दिव्यमूर्तिं सदा ध्यायामीत्यर्थः। अत्र नामेति रूपस्याप्युपलक्षणं हृद्गतं हृदये स्थितम्। एषा त्वां प्रति ईदृग् दृढव्यवसायशीला अहं तव किङ्करी तनुं मनः प्राणांश्च त्वयि समर्प्य स्थितास्मि। अथ एवं सति तव नाम स्मरन्त्या मे मृषा मिथ्या प्रलपितैः कौलीनैः अन्यासक्तेयमित्याद्यपवादैः किं न किंचिद् बाधकमित्यर्थः ॥ ८० ॥

गीतान्ते च समुत्थिता झटिति सा श्रीरत्नसिंहात्मजा
ब्रह्मानन्दमयी क्षणात्परवशा लास्यं वितेनेऽद्भुतम्।
द्रष्टुश्चक्षुरगाहतेव निखिला शेषेन्द्रियव्यापृतिः
पश्यन्नर्तनमेव यच्चिरतरं स्तब्धोऽवतस्थे जनः ॥ ८१ ॥

**गीतान्त इति।** श्रीरत्नसिंहात्मजा सा मीरा गीतान्ते झटिति च शीघ्रमेव समुत्थिता। ब्रह्मानन्दमयी परानन्दस्वरूपं प्राप्ता, अत एव क्षणात् परवशा अद्भुतं लास्यं नृत्यं वितेने चक्रे। द्रष्टुः प्रेक्षकस्य निखिला समस्ता शेषेन्द्रियव्यापृतिः चक्षुः नेत्रम् अगाहतेव प्रविष्टेव इत्युत्प्रेक्षा। यत् यस्माद् जनः प्रेक्षको जनः नर्तनमेव पश्यन्। एवकारेण इतरेन्द्रियव्यापारव्यवच्छेदः। चिरतरं स्तब्धः सन् अवतस्थे। अद्भुतो रसः। लोकातिगवस्तुरूपा मीरा आलंबनविभावः। लास्यमुद्दीपनम्। विषयान्तरपरिहारेण

तन्मूर्त्तदर्शनमनुभावः । स्तब्धस्थितिहेतुरावेगः सञ्चारी । शेषेन्द्रियवृत्तिश्चक्षुरगाहतेवेत्युत्प्रेक्षा । तेनालङ्कारेण प्रेक्षकैर्विषयान्तराणि परिहृतानीति वस्तु व्यज्यते । अत्र च स्थायी विस्मयः ॥ ८१ ॥

**भूयोदिव्यविभूतिदीप्तिविसरैः श्रीकृष्णमूर्त्युद्भवै-**
**र्मीरायाः परितः शिरः सुरुचिरं जज्ञे प्रभामण्डलम् ।**
**दिव्यामोदभरेण पूर्णमभवद्देवालयाभ्यन्तरं**
**साप्यानन्दमहार्णवान्तरपतत् कैश्चित्समं मूर्च्छितैः ॥ ८२ ॥**

**भूय इति ।** श्रीकृष्णमूर्त्युद्भवैः श्रीकृष्णस्य मूर्तेः सकाशात् निर्गतैः भूयोदिव्यविभूतिदीप्तिविसरैः भूयसीनां अनेकानां दिव्यानां देवसंबंधिनीनां विभूतीनाम् ऐश्वर्याणां दीप्तयः प्रभाः तासां विसरैः समूहैः मीरायाः शिरः परितः शिरसः समन्तात् सुरुचिरम् अत्युज्ज्वलं प्रभामण्डलं कान्तिचक्रवालं जज्ञे समजनि । देवालयाभ्यन्तरं देवस्थानस्य अन्तर्भागः दिव्यामोदभरेण लोकोत्तरगाढपरिमलातिशयेन पूर्णमभवत् परिपूरितमासीत् । सापि मीरा च मूर्च्छितैः विस्मयानन्दपारवश्यात् मूर्च्छां प्राप्तैः कैश्चिद् भक्तप्रवरैः समं सह आनन्द एव महार्णवः तस्य निरवधिकत्वाद् अगाधत्वाच्च तस्य अन्तः अपतत् मग्नाभूदित्यर्थः ॥ अत्राप्यद्भुतो रसः । परन्तु श्रीकृष्णमूर्तिरालम्बनम् । तस्माद्दीप्तिविसरः प्रभामण्डलबन्धः सौरभोदयश्च उद्दीपनविभावः । आनन्दमग्नता अनुभावः । मूर्च्छारूपो मोहः सञ्चारी । सहोक्तिरलङ्कारश्च चतुर्थे पादे ॥ ८२ ॥

**ध्यानोन्मग्नमनःप्रसादरुचिरां भक्तप्रकाण्डेश्वरी-**
**मालोक्यातिचमत्कृतो यवनराड्दिव्येन तत्तेजसा ।**
**द्रागुत्थाय निवारितोऽपि सुहृदा तामेत्य बद्धाञ्जलिः**
**प्राह श्रीमति गृह्यतामिति सरं मुक्तामयं ढौकयन् ॥ ८३ ॥**

**ध्यानेति ।** यवनराड् यवनराजः श्रीमानकबरः ध्यानादुन्मग्नस्य बहिर्मुखस्य मनसः प्रसादेन नैर्मल्येन रुचिरां प्रकाशमानां भक्तप्रकाण्डेश्वरीमालोक्य लोकातिगतेन तस्यास्तेजसा अतिचमत्कृतोऽतीवविस्मितः सन् द्राग् झटिति उत्थाय सुहृदा सहचरेण तानसेनेन निवारितोऽपि तां मीराम् एत्य उपेत्य बद्धाञ्जलिर्भूत्वा मुक्तामयं मौक्तिकैः घटितं सरं मालां ढौकयन् उपहरन् हे श्रीमति, गृह्यतामिति प्राह व्यज्ञापयत् ॥ ८३ ॥

**हारं प्रेक्ष्य महार्हमाह नृपजा पूज्याः किमेतेन मे**
**जाने देवि तपोधनासि तदयं देवाय भक्त्यार्प्यते ।**

इत्युक्त्वा परमादरात्सदुपदामादाय पाणिद्वये
श्रीजानेरधिकण्ठमर्पितवती स्रक् चापि धन्याऽभवत् ॥ ८४ ॥

**हारमिति** । नृपजा राजपुत्री मीरा महार्हं महामौल्यं हारं प्रेक्ष्य पूज्या आर्या एतेन हारेण मे मम किम्, अकिंचित्करत्वान्मया न गृह्यत इत्याह—देवि, जाने अनेन तव न किंचित्प्रयोजनमिति जानामि । किं च । तपोधना तप एव धनं यस्याः सा तादृशी त्वमसीति जानामि । तत् तस्माद् एवं ज्ञात्वैव अयं सरः भक्त्या देवाय अर्प्यते न तु त्वदर्थे । इत्युक्त्वा एवमभिहिता सदुपदां शोभनमुपायनं परमादरात् आदरातिशयेन पाणिद्वये उभाभ्यामपि हस्ताभ्याम् आदाय स्वीकृत्य श्रीजानेः श्रीः लक्ष्मीः जाया यस्य सः तस्य श्रीकृष्णस्य अधिकण्ठं कण्ठे अर्पितवती बबन्ध । किं च । स्रगपि हारोऽपि धन्या लब्धजन्मसार्थक्या । धन्या स्रगिति स्रजः साफल्यातिशयव्यञ्जकोऽत्यन्ततिरस्कृत-वाच्यरूपलक्षणामूलो ध्वनिः । अपि च अचेतनाया अपि स्रजो दिव्यसंपर्केण जन्म-साफल्ये सति चेतनाभक्तिमन्तो मनुष्या भगवत्सेवया जन्मसार्थक्यं भजन्तीति किमु वक्तव्यमित्यर्थापत्तिरलङ्कारो व्यज्यते, तस्माद्वस्तुना अलङ्कारध्वनिः ॥ ८४ ॥

वृत्तान्तं यवनागमस्य नृपजः श्रुत्वा भृशं चुक्षुभे
स्पृष्टं धृष्टतमेन धिक् पदयुगं दत्तश्च हारः स्त्रियः ।
ध्वस्तं नः कुलगौरवं निमिषतामित्येष रोषाज्ज्वलन्
वाचो वह्निततीरिवाभ्युदगिरद् राजन्यकोपेन्धनीः ॥ ८५ ॥

**वृत्तान्तमिति** । नृपजः राजपुत्रः यवनस्य अक्बरनृपतेः आगमनस्य वृत्तान्तं श्रुत्वा भृशं चुक्षुभे संचलितचित्तोऽभूत् । अतः किं कृतवानित्याह—धृष्टतमेन धूर्तप्रवरेण तेन यवनेन स्त्रियो मद्भार्यायाः पदयुगं पादद्वयं स्पृष्ट्वा हारश्च दत्त इति धिक् । इदमतीव निन्द्यम् । किं च । नः अस्माकं कुलगौरवं वंशपरम्परागता प्रतिष्ठा निमिषतां पश्यतोऽस्मान् अनादृत्य इत्यर्थः । अनादरे षष्ठी । ध्वस्तं नाशितमिति कारणादेषः कुमारो रोषात् क्रोधेन ज्वलन् तप्यमानः सन् राजन्यकोपेन्धनीः क्षत्रियाणां कोपस्य इन्धनीः उद्दीपिकाः वह्निततीरिव अग्निकणैः सदृशीः वाचः वचनानि अभि क्षत्रियाणामग्रे उदगिरद् उच्चारितवान् । उपमा ॥ ८५ ॥

अथ तान्येव वचनानि उपन्यस्यति ।

सर्वक्षत्रविडम्बनेयमहहा क्षत्राङ्गनामप्यसौ
देवोपायनकैतवान्नरपशुः स्पृष्ट्वा पदे धर्षयेत् ।
जीवन्तोऽपि वयं मृता हि यदयं भूयः स्वदेशं गतो
धिक् क्षत्रान् यदरिस्सुरार्चनगृहे दृष्टोऽपि यैर्न क्षतः ॥८६॥

**सर्वेति ।** असौ नरपशुः यवनाधमः देवोपायनकैतवाद् देवोपहारव्याजेन । आगत्येति शेषः । क्षत्राङ्गनामपि पादयोः स्पृष्ट्वा धर्षयेद् विमानयेत् । अस्मान् इति शेषः । इति इयं सर्वक्षत्रविडम्बना समस्तक्षत्रियाणाम् अपमानः न केवलं ममेति भावः । अहहेति इदमतीव दुःखजनकम् । किं च । अयं यवनः यद्यस्मात् स्वदेशं भूयः गतः प्रतिनिवृत्तोऽभूत् तस्माद् वयं जीवन्तोऽपि मृता हि मृता एव मन्तव्या इति शेषः । यद् यस्माद् अरिः शत्रुः यवनः सुरार्चनगृहे देवपूजास्थाने यैः दृष्टोऽपि न क्षतः दण्डितोऽभूत् तान् क्षत्रान् धिक् ते गर्हणीया इत्यर्थः । जीवन्तोऽपि वयं मृता इति विरोधाभासालङ्कारेण वध्यमपि शत्रुं मुक्तवतामस्माकं जीवनं व्यर्थमित्यर्थो वस्तुरूपो व्यज्यते । अत्यन्ततिरस्कृतवाच्यरूपो ध्वनिः ॥ ८६ ॥

**इत्युद्घुष्य गते पुनः स्ववनितां वादस्तयोरित्यभूद्**
**वंशध्वंसकरी बत त्वमसि नः स्वामिन् मया किं कृतम् ।**
**भ्रष्टासि त्वमिह प्रभो कथमिदं म्लेच्छेन संभाषणाद्**
**धर्मात्मा ह्ययमाः प्रशंससि शठं किं देवभक्तः शठः ॥ ८७ ॥**

**इतीति ।** इति एवं प्रकारेण उद्घुष्य उच्चैः घोषयित्वा स्ववनितां निजभार्यां प्रति पुनः गते कुमारे इति शेषः । तयोर्वादः प्रश्नोत्तररूपसंकथा इति वक्ष्यमाणप्रकारेण अभूत् समजनि यथा । बतेति दुःखे इदं बहुशोचनीयं यत्त्वं नः अस्माकं वंशध्वंसकरी वंशस्य ध्वंसकरी नाशकर्त्री असि । इति कुमारस्य वचनम् । स्वामिन्, मया किं कृतमिति मीरायाः । त्वमिह इदानीं भ्रष्टासि जातिभ्रष्टासि इति कुमारस्य आक्षेपः । प्रभो कथमिदम् इति मीराया जिज्ञासा । म्लेच्छेन यवनेन संभाषणात् तव भ्रष्टत्वमिति शेषः कुमारोत्तरम् । अयं यवनश्च धर्मात्मा धार्मिकस्वभावो हि खलु । इति मीरायाः समाधानोक्तिः । आः इति कोपे । शठं धूर्तं प्रशंससि स्तौषि इति काकुः कुमारस्य । किं देवभक्तः शठः इत्यादि मीरायाः । देवभक्तस्य सत्यप्रधानत्वात् शठस्य असत्यप्रधानत्वाद् उभयोर्विरोधे सति यो भक्तः स शठो न भवतीति तस्या भावः ॥ ८७ ॥

**तेनास्मत्कुलमद्य दूषितमहो किंहेतुकं दूषणं**
**स्पृष्टं तेन तवाङ्गकं भगवतः सर्वे समाः प्राणिनः ।**
**हारोऽयं तव पातकं स्फुटयति स्वामिन् कुतोऽयं भ्रमो**
**धूर्ते ध्वंसमुपेहि सिन्धुपतनान्मा तिष्ठ दृग्गोचरे ॥ ८८ ॥**

**तेनेति ।** तेन यवनेन अद्य अस्मत्कुलं दूषितमहो । इति क्रोधसंबोधनम् । अत एवायं शठ इति कुमारस्य भावः । को हेतुरस्येति किंहेतुकं दूषणम् । इति मीरायाः प्रश्नः । ते तव अङ्गकं शरीरं स्पृष्टम् । अत एव कुलदूषणं जातम् । इति

कुमारस्याक्षेपः। भगवतः सर्वे प्राणिनः समाः। यवनो वा द्विजो वा शूद्रो वा देवस्य समाना इति मीरायाः समाधानम्। अयं हारः तव पातकं स्फुटयति स्पष्टीकरोति। इति अन्यः कुमारस्याक्षेपः। स्वामिन्, कुतोऽयं भ्रमः अयथार्थबुद्धिः। यन्मां पातकित्वेन शङ्कसे तन्न सत्यमित्यर्थः। धूर्ते, ध्वंसमुपेहि सिन्धुपतनात् नद्यां समुद्रे वा पतनात् पतित्वा त्वं म्रियस्व। दृग्गोचरे मम दृष्टिपथे मा तिष्ठ। इति कुमारस्य साग्रहत्याग-निर्देशः॥ ८८॥

**आज्ञामक्षरशोऽनुवर्तितुमसौ नद्यास्तटं प्रस्थिता**
**गायन्ती परमात्मनः स्वरचितां गीतिं सुधावर्षिणीम्।**
**मुक्ताहं भवबन्धनाद् विलयनं गन्तास्मि सर्वात्मनी-**
**त्याश्वस्योच्चतरं विरौति नय मां गोविंद गोविंद भोः॥ ८९॥**

**आज्ञेति**। असौ मीरा आज्ञां पत्युरादेशम् अक्षरशः अन्यूनातिरिक्तं यथा तथा अनुवर्तितुं नद्यास्तटं तीरं प्रति प्रस्थिता प्रतस्थे। किं कुर्वती। स्वरचितां सुधावर्षिणीम् अमृतवृष्टिमिव आनंदकरीं परमात्मनः श्रीकृष्णस्य संबन्धिनीं गीतिं गायन्ती। मार्गे किं चान्यत्कृतवतीत्याह—भवबन्धनात् संसारनिर्बन्धात् मुक्ताहं मुक्तास्मि भर्त्रैव परित्यागात् अत एव सर्वात्मनि विश्वव्यापके श्रीकृष्णे विलयनं लीनतां गन्ता गमिष्यामि। श्रीकृष्ण-सायुज्यलाभादिति भावः। इत्याश्वस्य एवं चित्तसमाधानं कृत्वा भोः गोविंद गोविंद, मां नय तव सन्निधिं प्रापय इति उच्चतरं तारस्वरेण विरौति उद्घुष्यति स्म। सुधावर्षिणीम् इत्यतिशयोक्तिः॥ किञ्च प्रथमपादे मतिभावो व्यज्यते। द्वितीये हर्षः। तृतीये निर्वेदः। चतुर्थे सोत्कण्ठा देवरतिः इति भावशबलतालङ्कारः॥ ८९॥

**प्राप्तागाधसरित्तटां कृतमतिं निष्पन्दभावस्थितां**
**साक्षात्पर्वतनन्दिनीमिव शिवध्यानैकमग्नान्तराम्।**
**किन्नु स्यादिति भूतसंहतिरपि स्तब्धा समालोकते**
**तामाक्रष्टुमिव क्षिपत्यभिमुखं कल्लोलहस्तान्नदी॥ ९०॥**

**प्राप्तेति**। प्राप्तम् अगाधायाः सरितः तटं यया तां कृतनिश्चयां जले निपत्य मरिष्यामीति निश्चितामित्यर्थः। निष्पन्दभावस्थितां निष्पन्दभावेन निश्चलतया स्थितां शिवध्यानमग्नान्तरां शिवं निश्रेयसं भगवत्सायुज्यरूपं तस्य ध्याने एकस्मिन् ध्यान एव मग्नम् अन्तरं मानसं यस्याः ताम्। अत एव साक्षात्पर्वतनन्दिनीमिव पार्वतीसमानाम्। तथा हि। पार्वती च प्राप्तम् आसादितम् अगाधा गंभीरा सरितो निर्झरा यस्मिन् तद् गौरीशिखरं तस्य तटं सानुप्रदेशो यया सा। कृतमतिः शिवमेव पतिं प्राप्स्यामीति कृतनिश्चया। ईदृशीं पार्वतीमिव निश्चलस्थितां मीरां भूतसंहतिः भूतानां प्राणिनां पशुपक्षिमृगादीनां संहतिः समूहोऽपि पञ्चमहाभूतानां संघात इत्यपि ध्वन्यते। किन्नु

स्यादिति विस्मयमूलवितर्केण स्तब्धा समालोकते पश्यति स्म । अत्र अद्भुतो रसः । अद्भुतकर्मकर्त्री मीरा आलंबनम् । तस्या निश्चयनिष्पन्दस्थितिध्यानादिकम् उद्दीपनविभावः । पश्यतां भूतानां स्तब्धीभावोऽनुभावः । किन्नु स्यादिति स्थायिमूलो वितर्कः । किं च । कल्लोलहस्तान् कल्लोला महातरङ्गा एव हस्ताः तान् अभिमुखं मीरायाः पुरस्तात् क्षिपति प्रसारयति । तदेवोत्प्रेक्षते—तां मीराम् आक्रष्टुमिवेति । इयं फलोत्प्रेक्षा । कल्लोलहस्तानिति रूपकं च । किं च सरित् पदस्य अगाधविशेषणं साभिप्रायं यतो गाधायां सरिति प्राणत्यागो न भवेत् । अतः परिकरालङ्कारः । क्षिपतीति वर्तमानकालेन भूतार्थस्य प्रत्यक्षायमाणत्वेऽपि प्रत्यक्षायमाणस्यैव वर्णनान्नात्र भाविकालङ्कारः । अतः उत्प्रेक्षापरिकरश्लिष्टोपमारूपकाणां संसृष्टिः ॥ ९० ॥

**तावच्च श्रुतिमागमद् गुरुतरः श्रीकृष्णदेवालयाद्**
**घण्टाशङ्खमृदङ्गवाद्यमधुरः सन्ध्यार्चनाडिण्डिमः ।**
**तेन ज्ञापितदैनिकापि सलिले निर्वाणमेवेच्छती**
**सोज्झम्पाभवदंजसा तु विधृता केनाप्यदृश्येन सा ॥ ९१ ॥**

**तावदिति** । तावच्च अत्रान्तरे श्रीकृष्णदेवालयाद् गुरुतरः तारतरः घण्टाशङ्खमृदङ्गवाद्यैः मधुरः सन्ध्यार्चनासूचकः डिण्डिमः वाद्यविशेषध्वनिः श्रुतिमागमत् आकर्णितोऽभूत् । तेन घोषेण ज्ञापितदैनिकापि ज्ञापितं प्रतिबोधितं दैनिकं सायंतननित्यक्रियासमयो यस्याः सा प्रदोषपूजाकालः प्राप्त इति ज्ञात्वापीति भावः । सलिले निर्वाणमेव मरणमेव इच्छती इच्छन्ती । मरणस्य निर्वाणशब्देनोपलक्षणम् । अपमानितजीवनात् मरणमेव श्रेय इति ध्वन्यते । उज्झंपेन उत्पतनेन सह वर्तते इति सोज्झम्पा सोत्पतना अभवद् उत्पतिताभूद् इत्यर्थः । किंतु अंजसा तत्क्षणमेव सा अदृश्येन नेत्रयोरगोचरेण केनापि अचिन्त्यमहिम्नेत्यर्थः विधृता पतनाद् निवार्य भूमौ स्थापिताभूत् ॥ ९१ ॥

॥ इति सौ० क्षमायाः कृतिषु सव्याख्यायां मीरालहर्यां पूर्वखण्डः ॥



# मीरालहरी ।

## उत्तरखण्डः

वागश्रावि तया हि संस्तुतचरी दिव्या विविक्ताक्षरा
बाले मानुषवल्लभेन सह ते यात्रेह निर्वर्तिता ।
त्वं मे संस्मर पूर्वजन्मरमणी तद्राज्यमन्विष्यताम्
यद्वृन्दावनमञ्जुकुञ्जलसितं प्राप्योऽस्मि तत्र व्रजेः ॥ १ ॥

**वागिति** । अथ पतनान्निवार्य स्थापनानन्तरं संस्तुतचरी परिचितपूर्वा दिव्या आकाशसंभूता विविक्ताक्षरा स्पष्टोच्चारितवर्णा वाणी तया मीरया अश्रावि श्रुताभूत् । ते तव मानुषवल्लभेन मनुष्यजन्मवता पत्या सह यात्रा संसारः अवसितो भवति । त्वं मे पूर्वजन्मरमणी पूर्वस्मिन् जन्मनि रमणी कान्ता आसीरिति शेषः । संस्मर इदं सम्यक् स्मृतौ धारय । वृन्दावनमञ्जुकुञ्जलसितं वृन्दावनस्य रमणीयलतागृहशोभमानं यद्राज्यं यः प्रदेशः वर्तते तत् स्थानं अन्विष्यताम् मार्ग्यताम् । तत्र प्राप्योऽस्मि अत एव तत्र व्रजेः तत्र गच्छ । तत्रेति पदं काकाक्षिगोलकन्यायेन पूर्वापरोभयसंबन्धि वर्तते ॥ १ ॥

इत्याकर्ण्य गिरां सुधारसकिरां मीरा प्रतस्थे ततः
श्रीवृन्दावनमाशु तप्तसिकतादुर्गाहधन्वान्तरम् ।
गायन्ती मधुरस्वरं गिरिधर त्वामन्तरानापरः
सत्यप्रेमधरो ममाशिवहरश्चेतोहरः श्रीकरः ॥ २ ॥

**इतीति** । इति एवंविधां सुधारसकिराम् अमृतद्रववर्षिणीं गिरां वाचमाकर्ण्य मीरा आशु अविलंबेनैव ततः पतिनगरात् तप्तसिकतादुर्गाहधन्वान्तरं तप्ताभिः सिकताभिः दुर्गाहा दुःसंचारा धन्वानः मरुप्रदेशाः अन्तरे मार्गमध्ये यस्य तत् श्रीवृन्दावनं प्रति प्रतस्थे । मार्गे किं कुर्वती । मधुरस्वरं स्वरमाधुर्येण गायन्ती गानं कुर्वाणा । तद्गानस्य वस्तु संक्षिप्याह—हे गिरिधर धरतीति धरः गिरेर्धर इति गिरिधरः । पुरा किल श्रीकृष्णश्छत्रमिव लीलया गोवर्धनाख्यं गिरिमुद्धृत्य क्रुद्धमहेन्द्रजनितजलप्रलयमहासंकटाद् गोपालकान् ररक्ष । ते च तस्मिन् अतिशयितां भक्तिं वहन्तस्तमेव महेन्द्रस्थाने शिखरोपरि उपवेश्य महोत्सवं चक्रुः । तेन च कृतार्था बभूवुरिति भागवती कथा अत्रानुसंधेया । सत्यप्रेमधरः स्थिरानुरागवान् मम अशिवानि दुःखानि हरतीति अशिवहरश्चेतश्चित्तं हरति भक्त्युद्रेकोत्पादेनेति चेतोहरः । श्रियं मुक्तिसम्पदं करोति जनयतीति श्रीकरः ॥ २ ॥

सोढासह्यपरिश्रमां धृतजरत्कन्थां प्रसन्नाकृतिं
काषायाम्बरधारिणीमभिगतां ग्रामेषु संवीक्ष्य ताम् ।
तत्पादावनिजन् पयःफलमदुस्तस्यै तदङ्कं ययुः
शालीनप्रमदाः सुवृत्तपुरुषा हर्षेण बालार्भकाः ॥ ३ ॥

**सोढेति** । सोढाः असह्याः सहितुम् अशक्याः परिश्रमाः क्लेशाः यया तां सोढासह्यपरिश्रमाम् । धृता गृहीता जरती जीर्णा कन्था कर्पटकोशी यया ताम् । प्रसन्ना सौम्या आकृतिः रूपं यस्याः ताम् । कषायेण रक्तम् अम्बरं वसनं तद्धारयितुं शीलं यस्याः ताम् । ग्रामेषु तत्तद्ग्राममध्ये अभिगताम् अतिथिरिव संप्राप्तां तां मीरां संवीक्ष्य प्रेक्ष्य । शालीनप्रमदाः सत्कुलोत्पन्नाः स्त्रियः तत्पादौ अनिजन् प्रक्षालयामासुः । सुवृत्तपुरुषाः साधवः पयः दुग्धं फलानि च पयःफलम् अदुः प्रायच्छन् बालार्भकाः अत्यल्पवयसः अर्भकाः तस्या अङ्कम् उत्संगं हर्षेण ययुः सानन्दम् आरुरुहुः । अनेन तेषु मीराया मातृवात्सल्यं व्यज्यते । यथासंख्यमलङ्कारः ॥ ३ ॥

श्रीकृष्णैकगवेषणोद्यतमनास्तन्नामसङ्कीर्तनै-
र्निर्धूताखिलमार्गखेदनिचया सम्प्राप्तसम्मानना ।
ग्रामाद्ग्राममितस्ततो नृपसुता बम्भ्रम्य पादक्रमैः
संवृद्धोत्कलिका चिरेण समगाद् वृन्देव वृन्दावनम् ॥ ४ ॥

**श्रीकृष्णेति** । नृपसुता मीरा श्रीकृष्णस्य एकस्य गवेषणे उद्यतं मनः यस्य सा श्रीकृष्णैकगवेषणोद्यतमनाः । तस्य नाम्नां संकीर्तनैः । निर्धूतः निरस्तः अखिलः समस्तः मार्गखेदः प्रयाणश्रमः तस्य निचयः बाहुल्यं यया सा निर्धूताखिलमार्गखेदनिचया । सम्प्राप्ता सम्मानना यया सा । ग्रामाद् ग्रामम् इतस्ततः पादक्रमैः पादचारेणैव बम्भ्रम्य अतिशयेन भ्रमित्वा संवृद्धोत्कलिका संवृद्धा अधिकीभूता उत्कलिका भगवद्दर्शनोत्कण्ठा यस्याः सा । चिरेण दीर्घकालानन्तरं यथा वृन्दा श्रीकृष्णलालसा वनस्थलीं जगाम तथा मीरा वृन्दावनं समगात् प्राप ॥ ४ ॥

तस्मिन्नन्दनरामणीयकहरे तामीक्षमाणा वने
बाला मातृधिया पदे विलुलुठुर्नैसर्गिकप्रेमतः ।
गोपाः पूर्वजनुःसखीस्मृतिवशादुत्तस्थुराक्रीडितुं
राधा सेयमिति स्त्रियो जुगुहिरे स्वात्मानमाशु ह्रिया ॥ ५ ॥

**तस्मिन्निति** । नन्दनरामणीयकहरे देवोद्यानसौन्दर्यातिशायिनि तस्मिन् वने वृन्दावनस्थल्यां तां मीराम् ईक्षमाणाः पश्यन्त्यः नैसर्गिकप्रेमतः स्वाभाविक-प्रेम्णा मातृधिया मातरमिव मन्यमानाः पदे पदयोः विलुलुठुः अलुठन् । गोपा गोपालकाः पूर्वजनुःसखी

स्मृतिवशात् जन्मान्तरीयवयस्येयमिति स्मरणेन प्रेरिता आक्रीडितुम् उत्तस्थुः उत्थिता बभूवुः । इयं पुरतो दृश्यमाना सा पूर्वप्रसिद्धा राधेति मत्वेति शेषः । ह्रियो ह्रिया लज्जया स्वात्मानं स्वशरीरम् आशु शीघ्रं जुगुहिरे गूहितवत्यः ॥ ५ ॥

बिभ्राणा शरदिन्दुकान्तिरुचिरां पुण्याकृतिं योगिनी
चेतः सर्वजनातिशायिसुगुणस्तोमोज्ज्वलं पुष्णती ।
स्वप्रासादिकदर्शनेन जनतां विस्रम्भमापादयद्
वाचोयुक्तिविचेष्टितैर्मुनिसमं पूजामवापच्च सा ॥ ६ ॥

**बिभ्राणेति** । सा योगिनी मीरा शरदिन्दुकान्तिरुचिरां शरच्चन्द्रप्रकाशरमणीयां पुण्याकृतिं पवित्रामाकृतिं रूपं बिभ्राणा धारयन्ती । सर्वजनातिशायिनां सर्वलोकोत्तराणां सुगुणानां विवेकवैराग्यादिशोभनगुणानां स्तोमेन समुदायेन उज्वलं प्रकाशमानं चेतः चित्तं पुष्णती दधाना प्रसन्नतायुक्तेन दर्शनेन जनतां लोकान् विस्रम्भं विश्वासम् आपादयत् प्रापयत् । किं च । वाचोयुक्तिभिः सोपपत्तिकवचनप्रयोगैः विचेष्टितैः निजानुष्ठानैश्च मुनिभिः समं सदृशं यथा तथा पूजां सत्कारम् अवापद् अविंदत ॥ ६ ॥

अङ्गीकृत्य समर्हणामखिलशः सद्ध्यानसन्दानिता
यावद्रात्रि समाधिनिश्चलमनास्तस्थौ जनैः संवृता ।
प्रातर्व्युत्थितमानसा द्युतिमती योगार्णवान्निर्गता
सम्प्रापाद्भुतसंस्मृतिश्रियमहो स्वस्याः पुराजन्मनः ॥ ७ ॥

**अङ्गीकृत्येति** । अखिलशः सर्वलोकेभ्यः समर्हणां पूजाम् अङ्गीकृत्य स्वीकृत्य । सद्ध्यानसन्दानिता सतः सद्रूपस्य परमात्मनः ध्याने सन्दानिता बद्धा प्रणिहितचित्तेति यावत् जनैः संवृता समाधिनिश्चलमनाः समाधौ योगे निश्चलं मनः यस्याः सा यावद्रात्रि यावतीम् अखिलां रात्रिं तस्थौ स्थितवती । प्रातः व्युत्थितं बहिर्मुखं मानसं चित्तं यस्याः सा द्युतिमती तेजस्विनी योग एव अर्णवः तस्मान्निर्गता पुराजन्मनः पूर्वजनुषः पूर्वजन्मसंबन्धिनी अद्भुता संस्मृतिरेव श्रीः तां सम्प्राप लब्धवती । अहो इत्याश्चर्यम् । अत्र उत्पन्नायाः स्मृतेर्लक्ष्मीनारायणयोरिव निरपायित्वं व्यज्यते ॥ ७ ॥

अथ तानेव संस्मृतान् विषयान् यथासंभवं नवभिः श्लोकैर्वर्णयति ।

राधाहं रमणी पुरा यदुपतेरित्यात्मना निश्चिता
बभ्राम प्रतिदेशमुत्सुकमतिर्वृन्दावनालोकिनी ।
स्थानं स्थानमभूत्तया परिचितं रूपान्तरेऽपि स्थितं
तच्चेतोऽम्बुनिधौ तरङ्गनिवहाः प्रादुर्बभूवुः स्मृतेः ॥ ८ ॥

**राधेति ।** पुरा अहं यदुपते रमणी राधानाम्नी आसमिति आत्मना स्वयं निश्चिता । योगमहिम्ना निश्चयं प्राप्ता । वृन्दावनालोकिनी वृन्दावनं पश्यन्ती उत्सुकमतिः औत्सुक्य-भावयुक्ता प्रतिदेशं स्थाने स्थाने बभ्राम पर्याट । स्थानं स्थानं प्रतिस्थानं रूपान्तरेण स्थितमपि रूपभेदं प्राप्तमपि तया परिचितमभूत् । तच्चेतः तस्याः चेतः मन एव अम्बु-निधिः सागरस्तत्र स्मृतेः जन्मान्तरस्मरणस्य तरंगनिवहा तरंगाणां वीचीनां निवहाः स्तोमाः प्रादुर्बभूवुः प्रत्यक्षीबभूवुः । अत्र तृतीयपादार्थश्चतुर्थपादगतवाक्यार्थस्य हेतुरिति काव्यलिङ्गम् ॥ ८ ॥

**आसीदत्र मनोरमः किल मम प्रेमाश्रयो मण्डपः**
**स्फूर्जद्दिव्यसुगन्धहारिकुसुमः प्रच्छायशीतान्तरः ।**
**यत्रादौ रमणीयकैतवजुषा नीता मम प्रेयसा**
**जाता पाणिसरोजलालितवपुः सर्वाङ्गकम्पाकुला ॥ ९ ॥**

**आसीदिति ।** अत्र अस्मिन् स्थाने स्फूर्जत् स्फुर्जता उत्कटेन दिव्येन लोकोत्तरेण सौरभेण हारीणि मनोहराणि कुसुमानि यस्य सः । प्रच्छायशीतान्तरः प्रकृष्टछायोपेतं शीतलं च अन्तरं अन्तर्भागः यस्य सः । मम प्रेमाश्रयः प्रीत्यास्पदीभूतः मण्डपः आसीत्किल । किलेति प्रसिद्धौ । स्वयं बोधविषयत्वात् । यत्र यस्मिन् स्थाने आदौ पूर्वं रमणीयकैतवजुषा रमणीयं सुन्दरं कैतवं व्याजं जुषते सेवत इति तेन श्रीकृष्णेन नीता सती पाणिसरोजलालितवपुः तदीयहस्तकमलेन लालितशरीरा सर्वाङ्गकम्पाकुला सर्वाङ्गेषु कम्पः तेन आकुला जाता अभूवम् । अत्र संभोगशृङ्गारः स्पष्टः तथापि तस्य स्मृतेरङ्ग-भूतत्वात् प्रेयोलङ्कारो न तु रसध्वनिः ॥ ९ ॥

**निर्यातां पितुरालयात्प्रथमतः कामानभिज्ञामसौ**
**दृष्ट्वा नम्रमुखीं शनैर्जपति मे मन्नाम कर्णे प्रियः ।**
**ईषत्स्मेरमथाननं मृदु सरोजातेन कण्डूयते**
**नेत्रान्ते किमपीव वीक्ष्य सहसा गण्डस्थलीं चुम्बति ॥ १० ॥**

**निर्यातेति ।** असौ मम प्रियः पितुरालयात् पितुर्गेहात् प्रथमतः प्रथममेव निर्यातां निर्गतां कामानभिज्ञां मदनव्यापारमजानतीं मुग्धां नम्रमुखीं अवनताननां दृष्ट्वा मे मम कर्णे मन्नाम शनैः जपति उदचारयत् । अथाननं मदीयमुखं ईषत्स्मेरं मन्दहासयुक्तं सरोजातेन कमलेन मृदु मन्दं कण्डूयते उल्लिखति स्म । किं च । नेत्रान्ते अपाङ्गप्रदेशे किमपीव रोमाञ्चनमिव वीक्ष्य दृष्ट्वा गण्डस्थलीं कपोलं चुम्बति चुचुम्ब । अत्र संभोग-शृङ्गारः स्मृतिभावस्य अङ्गम् । तस्मात् प्रेयोलङ्कारः ॥ १० ॥

**स्मारं स्मारमितस्ततः परियती वाचोद्गिरन्ती स्मृतं**
**प्राहात्रैव विहारकुञ्जमभवद्देवेन्द्रवाटीनिभम् ।**
**यस्यान्तर्मम वासकं विरुरुचे कन्दर्पदर्पावहं**
**मुग्धा वामतयापि तस्य दयिता जातात्र धन्यास्म्यहम् ॥११॥**

**स्मारमिति ।** पूर्वोक्तप्रकारेण तत्तद्विषयान् स्मृत्वा स्मृत्वा इतस्ततः परियती पर्यटन्ती स्मृतं तत्पर्यटनप्रसंगेन ज्ञापितं वाचा उद्गिरन्ती उच्चारयन्ती प्राह अब्रवीत् । अत्रैव अस्मिन् स्थाने देवेन्द्रवाटीनिभं नन्दनवनोपमं विहारकुञ्जं क्रीडनलतागृहम् अभवद् आसीत् । यस्य निकुञ्जस्य अन्तः अभ्यन्तरे कन्दर्पदर्पावहं मदनोद्दीपनकरं मम वासकं शयनगृहं विरुरुचे शोभते स्म । इहैवाहं मुग्धा अप्रगल्भा वामतयापि प्रतिकूलचेष्टयापि तस्य दयिता प्रेमपात्री जाता अभूवम् । अत एव धन्यास्म्यहं कृतकृत्यास्मि ॥ ११ ॥

**सार्धं तेन गतैकदा ह्रदवरं लीलाप्रियेणोत्सुका**
**दृष्ट्वा तत्र निपातुमुत्सुकतरा गोपीः प्रियं लोचनैः ।**
**तन्मन्दस्मितनिर्जितान्ययुवतीश्चालोकितुं निःसहा**
**सद्यः सर्वविरागिणी निरगमं तत्प्रीतिनाथा ह्रदात् ॥ १२ ॥**

**सार्धमिति ।** एकदा लीलाप्रियेण क्रीडारुचिना तेन श्रीकृष्णेन सार्धं सह उत्सुका सोत्कण्ठा ह्रदं श्रेष्ठजलाशयं गता अगमम् । तत्र प्रियं मम वल्लभं लोचनैः निपातुं सानुरागमवलोकयितुम् उत्सुकतरा गोपीः दृष्ट्वा । तन्मन्दस्मितनिर्जिताः तस्य मम प्रियस्य मन्दस्मितेन निर्जिता वशीकृता अन्या इतराश्च युवतीः तरुणीः आलोकितुं प्रेक्षितुं निःसहा असहमाना सती । सद्यः तत्क्षणमेव सर्वविरागिणी पूर्वसंकल्पितसर्वक्रीडासु निःस्पृहा तत्प्रीतिनाथा तदनुरागैकशरणा ह्रदाज्जलाशयस्थानान्निरगमं निर्गता अभूवम् । अत्र प्रथमपादेन औत्सुक्यभावः । द्वितीयपादेन ईर्ष्या । तृतीयपादेन प्रणयकोपः । चतुर्थपादेन निर्वेदश्च प्रतीयन्ते । इति भावशबलतालङ्कारः ॥ १२ ॥

**ईर्ष्यावेगभरावसन्नहृदया बाणैर्मृगीव क्षता**
**शय्यागारभुवस्तलेऽहमशये व्याकीर्णभूषाम्बरा ।**
**तावच्चैत्य शनैर्ममाङ्गममृशज्जीवेश्वरस्तत्क्षणात्**
**स्पर्शानन्दसुधानिषिक्तमिव मे प्रक्लिन्नमासीद्वपुः ॥ १३ ॥**

**ईर्ष्येति ।** ईर्ष्यायाः अक्षान्तेः आवेगस्य संभ्रमस्य भरेण अतिशयेन अवसन्नं अभिभूतं हृदयं चित्तं यस्याः सा । व्याकीर्णा पर्यस्ता भूषाः आभरणानि अंबराणि वस्त्राणि च यस्याः सा अहं शय्यागारभुवस्तले शयनगृहस्य अनावृतभूप्रदेशे बाणैः क्षता विद्धा

मृगीव हरिणीव अशये शयिताभवम् । अत्र उपमावाक्येन तस्या दुःसहपीडा व्यज्यते । तावच्च अत्रान्तरे जीवेश्वरः मम प्राणनाथः शनैः मन्दमन्दं एत्य आसाद्य ममाङ्गं मम शरीरम् अमृशत् परामृष्टवान् । तत्क्षणाद् मे मम वपुः शरीरं स्पर्शानन्दसुधानिषिक्तं तदीयस्पर्शेन यः आनन्दः स एव सुधा अमृतं तया निषिक्तमिव अभिवृष्टमिव प्रक्लिन्नं प्रकर्षेण संजातस्वेदम् आसीत् । अत्र सुधानिषिक्तमिवेत्युत्प्रेक्षा । सा च रूपकानुप्राणिता । उत्तरार्धेन संभोगशृङ्गारे व्यज्यमानेऽपि तस्य स्मृतेरङ्गभूतत्वात् प्रेयोलङ्कारः । किं च । ईर्ष्याकोपप्रशमपूर्वकस्य स्पर्शानन्दरूपहर्षाख्यभावस्य उदयाद् भावोदयालङ्कारश्च ॥ १३ ॥

**गत्वा किञ्चिदथाब्रवीदिह पुरा रम्या बभूव स्थली**
**रेमेऽत्रास्मदुपाश्रितो मृगगणः पुष्टिं गतः शाद्वले ।**
**आवामत्र हि चन्द्रिकाधवलिते कुञ्जोपसीम्नि स्थितौ**
**हन्तारुन्तुदमुच्चकैरशृणुवाक्रन्दस्य दीनध्वनिम् ॥ १४ ॥**

**गत्वेति** । अथ किंचिद् दूरमिति शेषः गत्वा अब्रवीद् जगाद । तदेवाह—इह अस्मिन् प्रदेशे पुरा पूर्वं रम्या मनोहरा स्थली अकृत्रिमभूमिः बभूव आसीत् । अत्र अस्मिन् शाद्वले शादहरिते स्थले । अस्मदुपाश्रितो अस्माभिः पोषितः मृगगणः हरिणवृन्दं पुष्टिं गतः शरीरसंवृद्धिं प्राप्तः सन् रेमे क्रीडति स्म । अत्र हि अत्र किल आवाम् अहं मदीयप्रियश्च चन्द्रिकाधवलिते ज्योत्स्नया शुक्लीकृते कुञ्जोपसीम्नि लतागृहस्य समीपप्रदेशे स्थितौ सन्तौ । हन्तेति खेदे । अरुन्तुदम् अत्यन्तपीडाकरम् उच्चकैस्तारस्य आक्रन्दस्य दीनध्वनिं करुणस्वरम् अशृणुव श्रुतवन्तौ ॥ १४ ॥

**तत्रोपेत्य सवल्लभा सपदि मत्पुत्रीकृतं शावकं**
**निष्पिष्टं तरुशाखया पतितयाद्राक्षं मुमूर्षाकुलम् ।**
**मात्रा नेत्रजलस्रुता यमकरादाकृष्य वा रक्षितुं**
**गाढाश्लिष्टकलेवरं मृदुवपुर्लावण्यचेतोहरम् ॥ १५ ॥**

**तत्रेति** । दीनध्वनिश्रवणप्रदेशं प्रति सवल्लभा प्रियेण सह सपदि तत्क्षणमेव उपेत्य प्राप्य पतितया उपरिष्टात् छिन्नभ्रष्टया तरुशाखया निष्पिष्टं निष्पीडितम् अत एव मुमूर्षाकुलं मरणोन्मुखत्वेन आकुलं मत्पुत्रीकृतं मया पुत्रमिव पालितं शावकं हरिणपोतम् अद्राक्षम् अपश्यम् । मुमूर्षाकुलत्वस्य निष्पिष्टत्वहेतुकत्वात् पदार्थहेतुकं काव्यलिङ्गम् । पुनः कीदृशं शावकम् । नेत्राभ्यां जलम् अश्रु स्रवतीति नेत्रजलस्रुता तया बाष्पधारावर्षिण्येत्यर्थः । मात्रा हरिण्या यमकरात् मृत्योर्हस्ताद् आकृष्य आच्छिद्य रक्षितुं वा रक्षितुमिवेति हेतूत्प्रेक्षा । गाढाश्लिष्टकलेवरं गाढं निर्भरम् आश्लिष्टम् आलिङ्गितं कलेवरं शरीरं यस्य तम्

मृदोः कोमलस्य वपुषः शरीरस्य लावण्येन सौन्दर्येण चेतोहरं मनोहरं शावकमिति पूर्वेणान्वयः। अत्र करुणः। शावकः आलम्बनम्। निष्पिष्टतादिकम् उद्दीपनम्। नेत्रजलस्रुतिगाढाश्लेषादिकम् अनुभावः। आवेगः संचारी। करुणस्य स्मृतेरङ्गभूतत्वात् प्रेयोलङ्कारः॥ १५॥

दृष्ट्वा मां करुणस्वरेण हरिणी चिच्छेद मर्माणि मे
सार्धं शावकजीविते विहितया प्रत्याशया मे क्षणात्।
मामालोक्य परीतबाष्पनयनामाचष्ट नाथः प्रिये
मा शोकं वह दैवतन्त्रमखिलं जातस्य मृत्युर्ध्रुवः॥ १६॥

**दृष्ट्वेति।** हरिणी मां दृष्ट्वा क्षणात् क्षणमात्रेण शावकजीविते शावकस्य प्राणरक्षणे विहितया धृतया मे मम प्रत्याशया आशंसया सार्धं सह करुणस्वरेण मे मम मर्माणि चिच्छेद। ममातिमात्रपीडाम् अजनयत्। जीवितप्रत्याशां चिच्छेद इत्यनेन शावको ममारेत्यर्थः। नाथः मम प्रियः परीतबाष्पे पर्यश्रुणी नयने नेत्रे यस्याः तां माम् आचष्ट अब्रवीत्। तदेवाह—प्रिये, शोकं मा वह अखिलं सर्वं दैवतन्त्रं दैवाधीनं वर्तते। अपरिहार्यम् इदं शावकस्य मरणम् इति भावः। जातस्य मृत्युर्ध्रुवः चिराय जीवन्नपि प्राणी सर्वथा मरिष्यत्येव। अत्र सहार्थकसार्धशब्दस्य बलादेकमेव चिच्छेदेति पदं सम्बन्धिभेदेन द्वयोरर्थयोर्वाचकं भवति। तथा हि मर्माणीति पदेन संबन्धे परमपीडाकरत्वमस्यार्थः। प्रत्याशापदेन संबन्धे निर्मूलनमर्थः। एवमर्थतो भेदेऽपि चिच्छेदपदस्य एकरूपत्वादभेदाध्यवसायः। अत एवात्र मूलभूता अतिशयोक्तिरिति सहोक्तिरलङ्कारः। मा शोकं वहेत्यादि चरमपादगतवाक्यार्थो लोकोक्तिः। इमां च केचिदलङ्कारं मन्यन्ते। करुणोऽत्र रसः। शावकमरणम् आलम्बनम्। करुणक्रन्दनम् उद्दीपनम्। पर्यश्रुनयनत्वम् अनुभावः। प्रत्याशाभङ्गजन्यो विषादः सञ्चारी। तस्य च स्मृतेरङ्गत्वात् प्रेयोलङ्कारः॥ १६॥

इत्येवं जननान्तरस्मृतिचयं युक्तात्मना बिभ्रती
श्रीकृष्णैकपतिव्रता समधिकश्रद्धाममुष्मिन्दधौ।
राकायाः शशिनो द्युतिः क्षयमुपैत्याकृष्णपक्षाश्रया-
न्मीरायाः यशसः प्रभा तु विमला वृद्धिं प्रपेदे ततः॥ १७॥

**इत्येवमिति।** श्रीकृष्णैकपतिव्रता मीरा युक्तात्मना प्रणिहितमनसा जननान्तरस्मृतिचयं पूर्वजन्मस्मरणसंस्कारकलापं बिभ्रती दधाना अमुष्मिन् श्रीकृष्णे समधिकश्रद्धां पूर्वापेक्षया दृढतरां श्रद्धां दधौ अकरोत्। जन्मान्तरस्मृतिप्राप्तिः श्रद्धावृद्धिहेतुरिति पदार्थहेतुकं काव्यलिङ्गम्। इदमेव श्रद्धाधिक्यापादनं दृष्टान्तयति। यथा—राकायाः पूर्णचन्द्रयुक्तायाः निशायाः संबन्धिनः शशिनो चन्द्रस्य द्युतिः कान्तिः आकृष्णपक्षाश्रयाद्

बहुलपक्षमारभ्य क्षयमुपैति क्षीयते । मीराया यशसः कीर्तेः विमला निष्कलङ्का प्रभा कान्तिः तु ततः कृष्णपक्षाश्रयात् श्रीकृष्णपक्षमाश्रित्य वृद्धिं प्रपेदे अधिकाधिका बभूव । श्लेषानुप्राणितोऽत्र व्यतिरेकालङ्कारः । तस्य च काव्यलिङ्गेन संसृष्टिः ॥ १७ ॥

**तत्तेजः शतशश्चकर्ष जनतां सूचीमिवायोमणिः**
**प्राप्यैनां हि विनीतभिक्षुकवरः कोऽपि प्रणम्याब्रवीत् ।**
**भद्रे देहि शिवङ्करं किमपि मे किं भद्र दद्यामहं**
**यद्यन्मे चिरमीप्सितं सुभग तत्पृच्छेति सोवाच तम् ॥ १८ ॥**

**तत्तेज इति** । तत्तेजः तस्या मीरायाः तेजः तपःप्रभावः अयोमणिः अयस्कान्तशिला सूचीमिव लोहशलाकामिव जनतां लोकान् शतशः चकर्ष आकर्षति स्म । तथा हि । कोऽपि कश्चिद् विनीतो विनयसम्पन्नः भिक्षुवरः श्रेष्ठभिक्षुः एनां प्राप्य आसाद्य प्रणम्य नत्वा च अब्रवीत् । तदेवाह—हे भद्रे कल्याणि, शिवंकरं श्रेयस्करं किमपि मे मह्यं देहि । इति भिक्षुकस्य प्रार्थना । भद्र सौम्य, अहं किं दद्यां दातुं शक्नुयामिति मीराया वचनम् । यद्यन्मे यद्वा मे चिरमीप्सितं तत्तद्देहीति शेषः । हे सुभग, तत्तवाभीष्टं पृच्छ । इति सा तमुवाच । उपमा ॥ १८ ॥

**विश्वासोक्तिमिमां निशम्य तरुणः सन्त्यज्य वेषच्छलं**
**स्वात्मानं प्रकटीचकार सहसा तस्थौ च बद्धाञ्जलिः ।**
**साभिज्ञाय पतिं पपात चरणे गङ्गेव विष्णोः पदे**
**भद्रे गच्छ मया सहेति वचनं श्रुत्वा तथैवाकरोत् ॥ १९ ॥**

**विश्वासेति** । तरुणः स भिक्षुकः इमां अनन्तरोक्तां विश्वासोक्तिं मीरायाः विश्रम्भवचनं निशम्य श्रुत्वा वेषच्छलं कृत्रिमवेषं संत्यज्य त्यक्त्वा स्वात्मानं स्वरूपं प्रकटीचकार प्रकाशयामास बद्धाञ्जलिश्च तस्थौ । सा मीरा पतिं पाणिग्रहीतारं राजपुत्रं अभिज्ञाय ज्ञात्वा विष्णोः पदे गङ्गेव सुरनदीव चरणे पत्युः पदयोरित्यर्थः पपात अपतत् । भद्रे गच्छेत्यादि स्पष्टम् । गङ्गेवेत्युपमा ॥ १९ ॥

**या तस्या विगमाद्विदूनहृदया विच्छायसन्दर्शना**
**विध्वस्ताखिलभाग्यलक्षणगुणा दीनावतस्थे चिरात् ।**
**सेदानीं पुनरागमात् प्रमुदिता विष्वग् विसारिप्रभा**
**सौभाग्याङ्कभृता चितोरनगरी रेजे महौजस्विनी ॥ २० ॥**

**येति** । या चितोरनगरी तस्या मीराया विच्छायसन्दर्शना देशत्यागाद् विदूनहृदया अतीवदुःखितमानसा निस्तेजस्करूपा । विध्वस्ताखिलभाग्यलक्षणगुणा विध्वस्तानि प्रनष्टानि

अखिलानि भाग्यस्य संपत्तेः लक्षणानि चिह्नानि पुरालंकारदेवोत्सवप्रजारञ्जनक्रीडाविहारगोष्ठीप्रभृतीनि गुणाश्च सात्विका दयाधर्मदानादयः यस्याः सा । दीना अनौजस्ययुक्ता चिराद् दीर्घकालं अवतस्थे स्थितासीत् । सेदानीं सा नगरी इदानीं तस्याः पुनरागमात् प्रमुदिता प्रहृष्टा । विसारिप्रभा समन्तात् प्रसर्पिणी कान्तिर्यस्याः सा । सौभाग्याङ्कभृता सौभाग्यस्य अंकैः लक्षणैः गुणैश्च पूर्वोक्तैः भृता पूर्णा । महौजस्विनी महत्प्रशस्तं ओजः तेजः यस्याः सा । ईदृशी सती रेजे चकासे । अत्र प्रथमोद्दिष्टानां विदूनहृदयत्वादीनां चतुर्णां विशेषणानां क्रमेण प्रमुदितत्वादिभिः चतुर्भिर्विशेषणैः अनूद्देशाद् यथासंख्यालङ्कारः । किं च । नगर्याः निःश्रीकत्वसश्रीकत्वयोः क्रमेण मीरायाः अपगमप्रत्यागमहेतुकत्वेन वर्णनाद् मीरा लक्ष्मीरिव इत्यर्थो व्यज्यते । तेन वस्तुना वस्तुध्वनिः ॥ २० ॥

**निःशब्दः सुरमन्दिरे क्वचिदभूद्यो जैत्रघण्टागणः**
**या वीणामुरजावलिः समभवन्मौनव्रतालम्बिनी ।**
**ये वा नूपुरकङ्कणाः समभजन्मूकत्वमाकस्मिकं**
**ते सर्वे मुखरा बभूवुरधुना मातुः पुरो वार्भकाः ॥ २१ ॥**

**निःशब्द इति** । सुरमन्दिरे मीरायाः श्रीकृष्णदेवालये क्वचित् कुत्रापि स्थाने यः जैत्रघण्टागणः जयघण्टासमूहः निःशब्दः नादहीनः अभूदासीत् । या वीणामुरजावलिः वीणानां विपञ्चीनां मुरजानां मृदंगानां च आवलिः समुदायः मौनमेव व्रतं तदालंब्य स्थिता समभवत् । ये वा ये च नूपुरकङ्कणाः नूपुराणि मञ्जीराणि कङ्कणानि वलयानि च आकस्मिकं सहसा प्राप्तं मूकत्वं मौनं समभजन् असेवन्त । ते सर्वे अधुना मीरायाः प्रत्यागमनानन्तरं मातुरग्रे पुरो अर्भकाः शिशवः वा यथा मुखरा मुग्धभाषितानि जल्पन्तः वाचाला भवन्ति तथा मुखरा बभूवुः । सस्वना बभूवुरित्यर्थः । उपमालङ्कारः । अत्र उपमानोपमेयानां चेतनाचेतनत्वेपि मुखरपदस्य श्लिष्टार्थत्वात् साधर्म्याभिधानं नानुचितमिति द्रष्टव्यम् । किं च । प्रत्यागता मीरा पूर्ववद् नूपुरकङ्कणधारिणी देवार्चनव्यग्रा बभूवेत्यर्थो गम्यते । अयमेवार्थः घण्टानादवाद्यघोषकङ्कणादिझणत्कारैः कार्यमुखेन अभिधीयत इति पर्यायोक्तमलङ्कारः । अस्य उपमया संसृष्टिः ॥ २१ ॥

**स्वातन्त्र्यं परमं प्रशस्तमनसा पत्या स्वयं प्रापिता**
**सा निर्बाधतया चचार नियमैस्तावत्सुतीव्रं तपः ।**
**यावज्जीवितसूत्रमैहिकपतेरत्रोटि दैवेच्छया**
**सौभाग्यं समरक्षि दिव्यदयितव्यासङ्गतोऽस्याः पुनः ॥ २२ ॥**

**स्वातन्त्र्यमिति** । सा प्रशस्तमनसा उदारचेतसा पत्या श्रीभोजराजेन स्वयं परमं स्वातन्त्र्यं प्रापिता सती नियमैः व्रतैः सुतीव्रं तपः निर्बाधतया निर्विघ्नतया तावत्काल-

पर्यन्तं चचार । यावद् यावता कालेन ऐहिकपतेः इहलोकसंबन्धिनो भर्तुः श्रीभोजराजस्य जीवितसूत्रं प्राणतन्तुः दैवेच्छया ईश्वरेच्छया अत्रोटि त्रुटितमभूत् । पुनः तथापि अस्याः मीरायाः सौभाग्यं वैधव्याभावः दिव्यदयितव्यासङ्गतः भगवतः श्रीकृष्णस्य व्यासङ्गतः विशिष्टसंपर्काद्धेतोः समरक्षि अखण्डतया रक्षितमभूत् । अत्र ऐहिकपतेः जीवितम् अत्रोटीति यदभिहितं तेन पतिमरणं गम्यते । तस्मात्पर्यायोक्तमलङ्कारः । किं च । तेन सौभाग्यहानिकारणे पत्युर्मरणरूपे सत्यपि सौभाग्यं रक्षितम् इत्यभिधानाद् विशेषोक्त्यलङ्कारः । तयोरुभयोः सङ्करः ॥ २२ ॥

**भर्त्रानेन महात्मना वियुयुजे सा दैवदुर्योगतः**
**सार्धं बन्धुजनप्रदर्शितचरैः सत्कारमानादिभिः ।**
**पत्यौ सत्यपि यस्तदेकवशगोऽप्यन्तः स्म विद्वेष्टि तां**
**स भ्रातास्य निपीडयेदपतिकां यद्यत्र को विस्मयः ॥ २३ ॥**

**भर्त्रेति** । सा मीरा दैवदुर्योगतो भाग्यविपर्ययाद् महात्मना मनस्विना अनेन भर्त्रा श्रीभोजेन वियुयुजे वियुक्ताभूत् । अथ तद्वियोगानुषङ्गिणं अनर्थं सहोक्त्या प्राह । बन्धुजनप्रदर्शितचरैः बान्धवजनेन प्रदर्शितचरैः कृतपूर्वैः सत्कारमानादिभिः सार्धं सह भर्त्रा वियुयुजे इति पूर्वेण अन्वयः । पत्युर्मरणोत्तरं बन्धुभिः तिरस्कृताभूदिति भावः । कोऽयं बन्धुः येन सा तिरस्कृतेत्याह—पत्यौ श्रीभोजराजे सत्यपि जीवत्यपि तदेकवशगो तमेकमाश्रित्य स्थितोऽपि यः अस्य भ्राता मीराया देवरः तां मीरां अन्तः स्वात्मनि । बहिरप्रकटं यथा तथेति भावः । विद्वेष्टि विशेषेण दिद्वेष । स देवरः अपतिकां पतिहीनां यदि निपीडयेत् नितरां दूनयेत् अत्र को विस्मयः । न किञ्चिदाश्चर्यमित्यर्थापत्त्यलंकारः । तस्य सहोक्त्या संसृष्टिः ॥ २३ ॥

**संप्राप्य क्षितिपालतापदमसौ मीरां जिघांसुर्व्यधा-**
**न्नानापैशुनपापकूटरचनाः पूर्वं कदाप्यश्रुताः ।**
**यत्तेन प्रतिकूलबुद्धिरचितं तस्या हितायैव तद्**
**जातं साप्यभया जगौ गुणगणान् दीनावनश्रीपतेः ॥ २४ ॥**

**संप्राप्येति** । अत्र देवरः क्षितिपालतापदं राजपदवीं संप्राप्य लब्ध्वा मीरां जिघांसुः हन्तुमिच्छुः कदाप्यश्रुता अनाकर्णितपूर्वाः नानापैशुनपापकूटवचनाः नानाविधानां पैशुनानां कपटानां पापानां पातकानां च कूटरचना मिथ्याकल्पना व्यधात् अकार्षीत् । तेन देवरेण यत् प्रतिकूलबुद्धिरचितं अपकारबुद्ध्या कृतं तस्या मीराया हितायैव पथ्यायैव जातं परिणतमभूत् । सापि मीरा च अभया भयरहिता दीनावनश्रीपतेः दीनरक्षकस्य श्रीवल्लभस्य श्रीकृष्णस्य गुणगणान् गुणसमूहं जगौ गानेन तुष्टाव । प्रतिकूलस्याप्यनुकूलत्वेन परिणामः । भयराहित्यस्य श्रीपतेर्गुणगानस्य च हेतुरिति वाक्यार्थहेतुकं काव्यलिङ्गम् ॥२४॥

यन्मेऽदीयत देवरेण गरलं प्रच्छाद्य सद्भाजने
पीतं स्नातविपूतया तदहहा पीयूषमेवाजनि ।
या तेनैव करालसर्पभरिता प्राहायि मञ्जूषिका
ध्यानान्ते विवृता तु दर्शयति सा सौवर्णमूर्तिं विभोः ॥ २५ ॥

**यन्मे इति** । देवरेण प्रच्छाद्य गोपयित्वा सद्भाजने शोभनपात्रे यद् गरलं विषं मे अदीयत दत्तमासीत् तत् स्नातविपूतया स्नानविशुद्धया मया पीतं सत् पीयूषं अमृतमेव अजनि संजातं अहहा । अचिन्त्यो देवमहिमा इत्याश्चर्यम् । तेनैव देवरेण करालसर्पभरिता भयंकरसर्पेण पूर्णा या मञ्जूषिकापेटिका प्राहायि प्रेषिताभूत् । सा तु ध्यानान्ते ध्यानं समाप्य विवृता मया उद्घाटिता विभोः श्रीकृष्णस्य सौवर्णमूर्तिं हैमं विग्रहं दर्शयति स्म प्रादुरभावयत् । पदार्थस्य भूतस्य भविष्यतः यत्प्रेक्षायमाणत्वं तद् भाविकालङ्कारः ॥ २५ ॥

अन्तःशङ्कमयी बहिः सुरुचिरा शय्यामुना प्रेषिता
रात्रौ यावदहं शयेऽत्र मृदुला सा पुष्पतल्पायिता ।
श्रीकृष्णैकमनाः सुरक्षिततनुस्तन्नाम गायन्त्यहं
पश्यामि प्रभुमेव संततमहो तद्दिव्यभूतीस्तथा ॥ २६ ॥

**अन्तरिति** । अन्तःशङ्कमयी अन्तर्भागे लोहकण्टकैः पूरिता बहिर्भागे सुरुचिरा शोभनरूपा या शय्या अमुना देवरेण प्रेषिता आसीदिति शेषः । सा यावद्रात्रौ अस्यां शय्यायां अहं शये शयिताभूवं तावत्सा मृदुला भूत्वा पुष्पतल्पायिता पुष्पमयं शयनमिव आचरत् । श्रीकृष्णैकमनाः श्रीकृष्ण एव समाहितचित्ता अत एव सुरक्षिततनुः पूर्वोक्तविपद्भ्यः सम्यग्रक्षितशरीरा । काव्यलिङ्गम् । तन्नाम श्रीकृष्णनामानि गायन्ती अहं संततं निरन्तरं प्रभुमेव सर्वेश्वरं तमेव तथा तद्दिव्यभूतीः तस्य लोकोत्तरा विभूतयः महिमानः ताः पश्यामि साक्षात् करोमि । अहो इति विस्मये ॥ २६ ॥

इत्थं विप्रकृताप्यशेषसहना सा यावदस्थान्मुदा
तावद्देवरराक्षसो व्यरचयत्पूजाविधेर्विप्लवम् ।
कर्तव्यप्रतिपत्तिमूढहृदया प्राज्ञोपदेशेप्सिनी
पत्रं साथ विलिख्य पूज्यतुलसीदासाय तत्प्राहिणोत् ॥ २७ ॥

**इत्थमिति** । इत्थं एवं प्रकारेण विप्रकृतापि पीडितापि सा अशेषसहना सर्वं सहमाना यावन्मुदा सानंदं अस्थात् तिष्ठति स्म तावत् देवरराक्षसो देवरः राक्षस इव पूजाविधेः मीराया नित्यार्चनक्रमस्य विप्लवं विरोधं व्यरचयत् चकार । अथ ततः

कर्तव्यप्रतिपत्तिमूढहृदया किं कर्तव्यमित्यजानती अत एव प्राज्ञोपदेशेप्सिनी तत्त्वज्ञेभ्य उपदेशं शिक्षणं ईप्सिनी आप्तुमिच्छती पत्रं विलिख्य सा पूज्यतुलसीदासाय भक्तप्रवराय तत्पत्रं प्राहिणोत् प्रेषितवती ॥ २७ ॥

**आजन्मप्रभृतिप्रियः सहचरः श्रीकृष्ण एकः कृत-**
**स्तस्य प्रेमसुपाशपाशितहृदा गायाम्यजस्रं गुणान् ।**
**बन्धुश्येनविलूनपक्षविहगी सैषाद्य नष्टोद्गतिः**
**कृत्यं मे मुनिवर्य बोधय सतां वाचि श्रियो हि स्थिताः ॥ २८ ॥**

**आजन्मेति ।** आजन्मप्रभृति प्रियः मम जन्मारभ्य श्रीकृष्णः एक एव प्रियः प्रेमास्पदीभूतः सहचरः नित्यसंनिहितः सहायः कृतः भावितोऽस्ति । तस्य गुणान् प्रेमसुपाशपाशितहृदा प्रेम्णः प्रीतेः सुपाशैः शोभनप्रग्रहैः पाशितं निबद्धं हृत् हृदयं यस्याः सा । ईदृशी अजस्रं नित्यं गायामि । सैषा एवंभूताहं बन्धुः देवर एव श्येनः पत्री तेन विलूनौ छिन्नौ पक्षौ यस्याः सा । विहगी शकुंती । इति रूपकम् । अत एव नष्टोद्गतिः नष्टा विलुप्ता उद्गतिः उड्डयनशक्तिः यस्याः सास्मि । हे मुनिवर्य, मे कृत्यं मया अग्रे कर्तव्यं बोधय उपदिश । हि यस्मात् सतां वाचि साधूनां उपदेशवाक्ये श्रियः संपदः स्थिताः वर्तन्ते । साधूनां उपदेशः श्रेयस्कर इति भावः । मां बोधयेति विशेषस्य सतां वाचीत्यादि सामान्येन समर्थनाद् अर्थान्तरन्यासः । अतः रूपकार्थान्तरन्यासयोः संसृष्टिः ॥ २८ ॥

**ज्ञात्वा तद्गतिमादिदेश मतिमान् हेयास्त्वया नास्तिकाः**
**प्रह्लादः पितरं बलिः कुलगुरुं गोप्यः पतीनात्मनः ।**
**कैकेयीं भरतो दशाननमपि ज्येष्ठाग्रजं सोदरो**
**व्याचिक्षेप निराचकार मुमुचुस्तत्याज दूराज्जहौ ॥ २९ ॥**

**ज्ञात्वेति ।** मतिमान् निर्णीतकृत्यः तत् तस्या मीराया गतिं अवस्थां ज्ञात्वा बुद्ध्वा आदिदेश वक्ष्यमाणप्रकारेण उपादिशत् । तदेवाह । त्वया आस्तिकया नास्तिकाः परलोकश्रद्धाहीना हेयाः त्याज्याः । तत्र तथा कृतवतामुदाहरणम् । प्रह्लादः हिरण्यकशिपोः पुत्रः विष्णुभक्तः विष्णुद्वेषिणं पितरं व्याचिक्षेप दूरीकृतवान् बलिः दानवेन्द्रोऽपि विष्णुभक्तः कुलगुरुं विष्णुद्वेषिणं शुक्राचार्यं निराचकार तिरस्कृतवान् । गोप्यः गोपस्त्रियः श्रीकृष्णस्य दिव्यस्वरूपाभिज्ञाः स्वासां पतीन् श्रीकृष्णनिन्दकान् मुमुचुः त्यक्तवत्यः । भरतः ज्येष्ठाग्रजं श्रीराममनुव्रतः कैकेयीं रामद्रोहिणीं मातरं तत्याज त्यक्तवान् । सोदरः कनीयान् भ्राता बिभीषणः श्रीरामभक्तः ज्येष्ठाग्रजं दशाननं रावणमपि श्रीरामविरोधिनं दूराज्जहौ देशत्यागेन दूरीचकार ॥ अत्र उद्दिष्टानां क्रमेण यथासंख्यालंकारः ॥ २९ ॥

**एषामाचरितं निदर्शनतया गृह्णीष्व लोकोत्तरं**
**बान्धव्यं परमस्तु ते भगवता किं बन्धुपाशैः परैः।**
**किं तेनाञ्जनलेपनेन यदि तत्पर्यन्धयेल्लोचनं**
**किं भूयः कथितेन वा कुरु मतिं या देशकालोचिता॥ ३०॥**

**एषामिति।** एषां पूर्वोक्तविष्णुभक्तानां लोकोत्तरं असाधारणं आचरितं निदर्शनतया प्रमाणत्वेन गृह्णीष्व स्वीकुरुष्व। ते तव परं केवलं भगवता श्रीकृष्णेन बान्धव्यं सौहार्दं भवतु। परैः अन्यैः शत्रुरूपैः बन्धुपाशैः नीचबन्धुभिः किम्। न किञ्चित्प्रयोजनमित्यर्थः। इदं अप्रयोजकत्वं दृष्टान्तयति—तेन आञ्जनेन लेपनेन किं प्रयोजनं यदि तद् अञ्जनं लोचनं नेत्रं पर्यंधयेत् अंधीकुर्यात्। भूयः कथितेन किं वा। न कोऽप्यर्थः इति भावः। देशकालोचिता देशं कालं च अनुसृत्य उपपन्ना या मतिः निश्चयः तां मतिं कुरु। हितविघातुकबन्धूनां त्यागः लोचनविघातुकाञ्जनत्याग इवेति सदृशवस्तुप्रतिबिम्बनाद्दृष्टान्तालङ्कारः। किं भूयः कथितेनेति अनेन कथितस्यैव निषेधादुक्तनिषेधरूप आक्षेपालङ्कारश्च॥ ३०॥

**प्राप्यादेशमिमं सुपूज्यतुलसीदासादकार्षीन्मतिं**
**हित्वा बन्धुजनान्निवर्तितुमितो वृन्दावनीमन्दिरम्।**
**यत्रापे स्मृतिरद्भुता किल पुराजन्मान्तरव्यापृतेः**
**यत्रैवेशमुपासितुं च सुकरं सर्वात्मना श्रीपतिम्॥ ३१॥**

**प्राप्येति।** सुपूज्यात् अतिमाननीयात् तुलसीदासात् आदेशं प्राप्य मतिं निश्चयं अकार्षीत् चकार। किं कर्तुं। बन्धुजनान् हित्वा बान्धवान् परित्यज्य इतः पतिमन्दिरात् वृन्दावनस्य मन्दिरं निवर्तितुं पुनर्गन्तुम्। तत्र कारणविशेषमाह—यत्र यस्मिन् वृन्दाबने पुरा पतिप्रार्थनया पुनरागमनात्पूर्वं जन्मान्तरव्यापृतेः स्वकृतपूर्वजन्मकर्मणां अद्भुता आश्चर्यकरी स्मृतिः स्मरणं आपे लब्धासीत्। किल इति स्वानुभवप्रसिद्धौ। किं च यत्रैव यस्मिन्नेव वृन्दावने श्रीपतिं श्रीकृष्णं सर्वात्मना एकाग्रतया उपासितुं ध्यातुं सुकरं सुलभमस्ति। पुनर्वृन्दावनगमनस्य श्लोकोत्तरार्धगतवाक्यार्थहेतुकत्वात् वाक्यार्थहेतुकं काव्यलिङ्गम्॥ ३१॥

अथ प्रस्थितायाा मीरायाः प्रयाणवशाद् दशावैषम्यं वर्णयति।

**क्वेन्द्रश्रीः क्व पथि श्रमः क्व च सुखं हर्म्ये क्व वार्तिर्वने**
**मृष्टान्नं क्व सुवर्णपात्रकलितं भैक्ष्यं क्व कन्थार्पितम्।**
**क्व प्रासादगहंसतूलशयनं शय्याश्मसु क्वाध्वनो**
**नूनं निश्चितचेतसां तृणसमः कष्टाचलानां गणः॥ ३२॥**

**क्वेन्द्रेति** । राजविभवः पूर्वानुभूतः क्व पथि मार्गे श्रमः अनुभूयमानः प्रयासः क्व । किं च । हर्म्ये प्रासादे अनुभूतपूर्वं सुखं क्व वनेऽनुभूयमाना अर्तिः क्लेशः क्व किल । सुवर्णपात्राकलितं हेममयभोजनपात्रे परिवेषितं मृष्टान्नं सुप्रणीताहारः क्व । कन्थार्पितं कर्पटकोशे अन्यैर्दत्तं भैक्ष्यं भिक्षान्नं क्व । प्रासादगं राजगृहस्थितं हंसतूलेन निर्मितं शयनं शय्या क्व । अध्वनः मार्गस्य अश्मसु पाषाणेषु पाषाणमयी शय्या क्व । एषु वाक्ययुग्मेषु विरूपवस्तुसंघटनापूर्वं उपवर्णनाद् विषमालङ्कारः । तदर्थसमर्थनाय अर्थान्तरं न्यस्यति—नूनं यत्सत्यं निश्चितचेतसां दृढचित्तानां कष्टानि अचला इव दुर्वहत्वात्तेषां गणः समूहः तृणसमः तृणवद् गणनीयो भवति । अर्थान्तरन्यासः । तस्य च विषमेण सङ्करः ॥ ३२ ॥

**श्रीवृन्दावनमापतत्पुनरसौ दीर्घप्रवासोत्तरं**
**दुर्भिक्षोत्तरमागतेव सुचिरात्प्रावृड्विभूतिः शुभा ।**
**आमोदं भुवि तन्वती प्रविततं सन्तापमुच्छिन्दती**
**पुण्यज्योतिरुदीर्य लोकतमसो विच्छेदमातन्वती ॥ ३३ ॥**

**श्रीवृन्देति** । दुर्भिक्षोत्तरं अनावृष्टिक्षोभादनन्तरं सुचिरादागता चिरकालप्रतीक्षणात् प्राप्ता शुभकरी कल्याणकरी प्रावृड्विभूतिः वर्षाकालिकसंपत् इव असौ मीरा दीर्घप्रवासोत्तरं चिरकालं देशान्तरभ्रमणाद् अनन्तरं श्रीवृन्दावनं पुनः आपतत् आगतवती । द्वयोः उपमानोपमेयभूतयोः मीराप्रावृषोः साधर्म्यं श्लेषेण वर्णयति—भुवि वृन्दावनस्य आमोदं परिचितनिवासिनां आनन्दं तन्वतीति मीरापक्षे । भुवि दुर्भिक्षोपहतप्रदेशे आमोदं सौरभं तन्वतीति प्रावृट्पक्षे । प्रविततं महान्तं संन्तापमुच्छिन्दती चिरवियोगजन्यं क्लेशं उच्छिदती निर्मूलयन्तीति मीरापक्षे । अतिगाढं सन्तापं उष्मजनितां आर्तिं उच्छिदती शमयन्तीति प्रावृट्पक्षे । पुण्यं पावनं ज्योतिः ज्ञानप्रकाशम् उदीर्य उपदेशेन प्रसार्य लोकानां जनस्य तमसः अज्ञानस्य विच्छेदं निवृत्तिं आतन्वती उत्पादयन्तीति मीरापक्षे । पुण्यं पावनं ज्योतिर्विद्युतमुदीर्य लोकतमसः जगदन्धकारस्य विच्छेदं उत्सारणं समन्तात् कुर्वतीति प्रावृट्पक्षे ॥ ३३ ॥

वृन्दावनम् उपेत्य तत्र किं कृतवतीति वर्णयति—

**पावित्र्याम्बुसुवर्षणेन शुचितामापादयन्ती दिशः**
**कर्षन्ती गुणसौरभेण जनतारोलम्बवृन्दानि सा ।**
**श्रीमान् वा कृपणः सुधीरुत जडो योषाथवा पूरुषो**
**दुर्लंघ्यान्यपि निस्तरन्ति तपसेत्यादर्शयत्कर्मभिः ॥ ३४ ॥**

**पावित्र्येति** । सा पावित्र्यमेव अम्बु जलं तस्य सुवर्षणेन दिशः शुचितां आपा-

दयन्ती परिशोधयन्ती । तत्र स्थानात्स्थानं पर्यटन्ती स्वसान्निध्येन सर्वान् पवित्रीचकार इत्यर्थः । किं च गुणसौरभेण गुणानां दयासौजन्यभक्तिप्रभृतीनां सौरभेण परिमलेन जनता लोकाः एव रोलम्बा भ्रमराः तेषां वृन्दानि कर्षन्ती आकर्षन्ती । अनेन भ्रमराः सौरभ्य-स्थानं स्वयं यथा सन्निपतन्ति तथा लोकास्तद्गुणाकृष्टाः तत्पार्श्वमुपेयुः इति भावः । श्रीमान् वा कृपणः धनिको दरिद्रो वा सुधीरुत जडो विद्वान् पामरो वा योषाथवा पूरुषः स्त्री पुरुषो वा सर्वेऽपि निर्विशेषं दुर्लंघ्यान्यपि लंघयितुमशक्यानि दुर्गाणि तपसा निस्तरन्ति निस्तरितुं प्रभवन्तीत्यर्थं कर्मभिः स्वानुष्ठितैः आदर्शयत् प्रकटीचकार ॥ ३४ ॥

**तस्या लोकविलक्षणं समभवत्पूतात्मनस्तत्तपः**
**कायक्लेशविरूपणानि यदसौ व्यर्थानि नाशिश्रिये ।**
**नान्तःकण्टकमध्यशेत शयनं सेहे वृथा न क्षुधा-**
**तृण्निद्रा न च वल्कलं धृतवती चक्रे न मौनव्रतम् ॥ ३५ ॥**

**तस्या इति ।** पूतात्मनः शुद्धचित्तायाः तस्याः तत् प्रसिद्धं तपः मनःसमाधि-साधनीभूतो नियमः लोकविलक्षणं सामान्यतपस्विजनाचरितात् विरुद्धं लक्षणं यस्य तत् तथाविधं समभवत् आसीत् । तदेव प्रपञ्चयति—यदसौ कायक्लेशविरूपणानि देहपीडा-कराणि तप्तमुद्राधारणकेशलुञ्चनादीनि व्यर्थानि क्लेशवैरूप्यमात्रफलकतया निष्फलानि नाशिश्रिये कर्तव्यतया नाङ्गीचकार । किं च । अन्तःकण्टकं तीक्ष्णशल्यगर्भं शयनं नाध्यशेत । अपि च क्षुधातृण्निद्राः बुभुक्षापिपासासुषुप्साः वृथा न सेहे विशिष्टप्रयोजनं विना न सोढवती । वल्कलं चीरवसनं तपस्विवेषोऽयमिति मत्वा न च धृतवती मौनव्रतं न चक्रे इति ॥ ३५ ॥

**ध्यायन्ती मनसा जपैः प्रणुतिभिः कृष्णप्रसादेप्सिनी**
**लेभे सा क्षणमेकदैव सहसा देवस्य संदर्शनम् ।**
**दिव्यं तच्च पुनर्विलुप्तमभवत्साप्यश्रुधाराजलैः**
**शुष्कापाण्डु ममार्ज वक्त्रनलिनं चेतोवसादं गता ॥ ३६ ॥**

**ध्यायन्तीति ।** कृष्णप्रसादेप्सिनी श्रीकृष्णसाक्षात्काररूपमनुग्रहम् आप्तुमिच्छन्ती प्रणुतिभिः परमात्मनः प्रकृष्टस्तुतिरूपैः प्रणवादिभिः मनसा जपैः मनसैव निर्वर्तितैः जपैः ध्यायन्ती सा क्षणं क्षणमात्रं एकदैव एकवारमात्रं सहसा अवितर्कितमेव देवस्य संदर्शनं लेभे । दिव्यं तत् संदर्शनं च पुनः विलुप्तमभवत् तिरोहितमासीत् । सा च चेतोवसादं गता विषण्णभावं प्राप्ता । शुष्कापाण्डु नैराश्येन शुष्कं पाण्डु च वक्त्रनलिनं निजमुखपङ्कजम् अश्रुधाराजलैः बाष्पप्रवाहोदकैः ममार्ज क्षालयामास । अत्र हर्षाख्य-भावशान्तौ विषादोदयः । तच्च विलुप्तं सापि विषण्णेति क्रियायौगपद्यप्रतिपादनात्

समुच्चयालंकारः । अश्रुधाराजलैः मार्जनमित्यादिकस्य सा विषादेन निरर्गलं रुरोदेति गम्यमेव भङ्ग्या प्रतिपादितमिति पर्यायोक्तं च । द्वयोः सङ्करः ॥ ३६ ॥

**तद्वक्त्राम्बुजमश्रुवारिहिमयुग् भेजे विकासं पुनः**
**प्रत्याशादिवसेश्वरे समुदिते पूर्वस्मृतिक्ष्माभृति ।**
**प्रध्यानाम्बुनिधौ विगाह्य गहने संभूय सा प्रेयसा**
**ब्रह्मानंदमहातरंगनिचये दोलासुखान्यन्वभूत् ॥ ३७ ॥**

**तद्वक्त्रेति** । पूर्वस्मृतिक्ष्माभृति पूर्वशब्दोऽत्र दिक्कालोभयवाची । तथा च पूर्वजन्मसंबन्धिनी या स्मृतिः अहं श्रीकृष्णस्य प्रेयसीति सैव पूर्वक्ष्माभृत् उदयपर्वतः तस्मिन् प्रत्याशादिवसेश्वरे श्रीकृष्णो मामनुग्रहीष्यतीति प्रत्याशा मनोरथः सैव दिवसेश्वरः सूर्यः तस्मिन् समुदिते सति अश्रुवारिहिमयुक् अश्रुवारि नेत्रजलमेव हिमं तेन युज्यते इति हिमयुक् तद्वक्त्राम्बुजं तस्या वक्त्रमेव अम्बुजं कमलं पुनः विकासं भेजे विषादोत्तरक्षणे विकसितमासीत् । सा च गहने अगाधे प्रध्यानाम्बुनिधौ प्रकृष्टध्यानसागरे विगाह्य निमज्य प्रेयसा श्रीकृष्णेन संभूय मिलित्वा तत्साक्षात्कारजनितः ब्रह्मानंद एव महातरंगनिचयः तस्मिन् दोलासुखानि अन्वभूत् । अत्र पूर्वस्मृतौ पूर्वक्ष्माभृदारोपः पूर्वस्मृतिमारूढायां प्रत्याशायां दिवसेश्वरारोपे निमित्तमिति परम्परितं रूपकम् । किञ्च पूर्वजन्मान्तरीया स्मृतिरिव पूर्वः पूर्वदिग्भवः क्ष्माभृदिति च पूर्वशब्दस्य अर्थतो भेदे सत्यपि एकेनैव श्लिष्टपदेन निरूपणात् अभेदाध्यवसायरूपा अतिशयोक्तिः । अन्यत्रापि रूपकम् ॥ ३७ ॥

**गायन्ती महिमानमद्भुततरं प्रेम्णः कृपाब्धेर्विभो-**
**श्चक्रे संसृतिचित्रभूमिफलके चित्रप्रबन्धार्पणम् ।**
**चित्राणि व्यलिखत् स्वजीवनपटेष्वादर्शभूतानि सा**
**गाथामाल्यचयं जुगुम्फ सुरभिं रोमाञ्चितोदञ्चकम् ॥ ३८ ॥**

**गायन्तीति** । कृपाब्धेः दयासागरस्य विभोः सर्वव्यापिनः श्रीकृष्णस्य प्रेम्णः प्रीतेः अद्भुततरं महिमानं महत्त्वं गायन्ती । संसृतिचित्रभूमिफलके संसृतेः संसारस्य चित्रा शुक्लकृष्णमिश्राख्यनानारूपवासनाभिः उपरंजिता भूमिः अयं कर्मलोक एव फलकं तस्मिन् चित्रप्रबन्धार्पणं चित्राणि निजानुभवसिद्धानि आश्चर्याणि एव चित्राणि रञ्जितरेखारचनाः तेषां प्रबन्धस्य संघटनायाः अर्पणं विन्यासं चक्रे । अनेन सा भगवद्भक्तिमाहात्म्यं सर्वदा गायति स्म । तदेतद्गानं शृण्वतां विचित्रवासनाभिन्नमतीनां लोकानां हृदयानि स्वस्ववासनारूपं प्रतिपादितैः भक्तिमाहात्म्यप्रबन्धैरिव नितराम् आवर्जितानि बभूवुरित्यर्थः । किं च । स्वजीवनपटेषु स्वस्य जीवनानि जीवितव्यवहाराः एव पटाः तेषु आदर्शभूतानि अन्यैः अनुवर्तितुं प्रमाणभूतानि चित्राणि विविधानि उपदेष्टव्यानि

व्यलिखत् प्रादर्शयत् । किं च सुरभिं मनोहरं गाथामाल्यचयं गाथानां स्तुतिरूपगीतीनां मालासमूहम् । कीदृशं रोमाञ्चितोदञ्चकम् । गीतमात्रेण श्रोतॄणां रोमाञ्चजनकं जुगुम्फ गुम्फितवती । अनेन सा स्वयमाचरितैः कर्मभिरेव लोकानाम् आदर्शभूता निरायासेन सत्प्रवृत्तिमेतान् अग्राहयत् । रसपरिवाहिनीश्च गाथा विरचय्य ताभिर्लोकान् परमाल्हादयद् इति भावः । द्वितीयतृतीयपादयोः रूपकमलङ्कारः ॥ ३८ ॥

दिव्यप्रेमलतामनेकविधिभिः संपोष्टुकामा सती
शश्वत्तां प्रणिधानयोगपयसासिञ्चत्प्रयत्नेन सा ।
व्याचिक्षेप विकल्पकत्तृणचयं तन्मूलसारक्षयं
संवृद्धिं च निनाय मानसवनीरक्षाकरी वल्लरीम् ॥ ३९ ॥

**दिव्येति** । दिव्यः देवविषयः प्रेमा भक्तिरेव लता इति रूपकम् एवमुत्तरत्रापि । ताम् अनेकविधिभिः पूजास्तुतिकीर्तनध्यानादिभिः उपायैः संपोष्टुकामा सती सम्यग् रक्षितुमिच्छन्ती तां शश्वद् निरन्तरं प्रणिधानयोगपयसा प्रणिधानं परात्मनि सर्वक्रियासमर्पणं योगः फलसंन्यासलक्षणः तावेव पयः जलं तेन सा प्रयत्नेन परमादरेण असिञ्चत् । किं च । सा मानसवनीरक्षाकरी मानसमेव चित्तमेव वनी उद्यानं तस्याः रक्षाकरी संरक्षिका तन्मूलसारक्षयं तस्या भक्तिलतायाः मूलं श्रद्धा तस्य सारः स्थिरांशः तस्य क्षयः क्षयकरः तं विकल्पकत्तृणचयं विकल्पानां संशयात्मकभेदबुद्धीनामेव कत्तृणानां कुत्सिततृणानां चयं समूहम् उच्चिक्षेप उद्धृत्य निरस्तवती । एवं प्रकारेण वल्लरीं पूर्वोक्तां भक्तिलतां संवृद्धिं निनाय संवर्धयामास ॥ ३९ ॥

कस्य प्रेम समर्ज्यतां भगवतो न स्त्रीनृपादेः पुनः
सम्पाद्यं मनुजेन तत्कथमहो भक्त्या न चाटूक्तिभिः ।
सा लभ्या कथमीश्वरैकमननान्नार्थादिसंचिन्तना-
दित्येषा परतत्त्वदर्शनविधिं भक्तालिमग्राहयत् ॥ ४० ॥

अथ सा न केवलमात्मोद्धारमात्रेणैव तृप्तासीत्परमन्येषामपि भक्तानां समुद्धाराय सदुपदेशान् कृतवतीत्याह । कस्येति । कस्य प्रेम समर्ज्यतां परमपुरुषार्थस्य प्राप्तये कस्य प्रीतिः संपादनीयेति प्रश्नः । भगवतः परमेश्वरस्येत्युत्तरम् । तदन्यप्रीतेरपोहनाय प्राह न पुनः स्त्रीनृपादेरिति । स्त्रीणां नृपाणामादिग्रहणेन सद्गृहस्थानां च प्रीतिर्न समर्जनीया । स्त्रीणां प्रीत्या कामः, नृपाणामर्थः, सद्गृहस्थानां धर्म इति तत्त्रितयप्रीतेः त्रिवर्गमात्रफलकत्वात् । अहो इदमाश्चर्यं भाति । कुतः मनुजेनाल्पायुषा तत्तादृशं प्रेम कथं संपाद्यमिति प्रश्नः । भक्त्या एकान्तभक्तियोगेन इत्युत्तरम् । न चाटूक्तिभिः कुशलनर्मप्रलापैर्न संपादयितुं शक्यम् । सा भक्तिः कथं लभ्या । ईश्वरैकमननाद् ईश्वरस्य

एकस्यैव प्रणिधानात् । न तु अर्थादीनाम् इतरपुरुषार्थानां सश्चिन्तनादित्येवंप्रकारेण परतत्त्वदर्शनविधिं परमात्मनः तत्त्वस्य स्वरूपस्य दर्शने साक्षात्कारे विधिमुपायं भक्तालिमग्राहयत् भक्तसमूहस्य उपदिदेश । अत्रालङ्कारः परिसंख्या शाब्दी अपोहनीयस्य शब्देनैव प्रतिपादितत्वात् ॥ ४० ॥

**दृष्टश्चेन्महिमा विभोरणुरिदं विश्वं विभात्यात्मन-**
**स्तन्नेत्रस्य सुचारुता यदि मदो हा पुण्डरीक क्व ते ।**
**तत्तेजो यदि का सहस्रकर ते तेजस्वितायाः कथा**
**नित्यानन्दमयाननं यदि विधो किं शब्दसाम्येन ते ॥ ४१ ॥**

**दृष्ट इति ।** विभोः परमात्मनः श्रीकृष्णस्य महिमा महत्त्वं दृष्टश्चेत् साक्षात्कृतो यदि स्यात्तदा इदं दृश्यमानं विश्वं चराचरप्रपञ्चः आत्मनः द्रष्टुः भक्तस्य अणुर्विभाति अत्यल्पः पदार्थ इव दृश्यते । अनेककोटिब्रह्माण्डनायकस्य परमात्मनो गर्भे जगतामन्तर्हितत्वादस्य विश्वस्य एकदेशमात्रता । तथा च "पादोऽस्य विश्वा भूतानि" इति मन्त्रवर्णः । तन्नेत्रस्य तस्य श्रीकृष्णस्य नेत्रस्य सुचारुता परमरामणीयकं यदि दृष्टा इति शेषः । पुण्डरीक हे कमल ते मदः सौन्दर्यगर्वः क्व क्व स्यात् नष्ट एव । हा अत एव ते मदः शोच्यः । सहस्रकर हे सूर्य, तत्तेजो यदि दृष्टं तदा ते तेजस्वितायाः का कथा निस्तेजस्को भवानित्यर्थः । तस्य श्रीकृष्णस्य नित्यानन्दमयम् आननं यदि दृष्टं तदा हे विधो ते शब्दसाम्येन किम् । शब्दः विधुः विष्णुः इत्यर्थकः तेन साम्यं विधुश्चन्द्र इत्यनेन अभेदः । तन्निष्फलम् । अत्र पादत्रये प्रसिद्धोपमानानां पुण्डरीकादीनां निष्फलत्वाभिधानात् प्रतीपालंकारः दर्शनक्रियासंबन्धेन प्रकृतानामेव बहूनां वर्णनात् तुल्ययोगिता च ॥ ४१ ॥

पूर्वश्लोकद्वये प्रक्रान्तमुपदेशमिदानीमुपसंहरति ।

**इत्थं चेतसि सम्प्लुते भगवतो माहात्म्यसंभावनैः**
**प्रस्तोतुं विभुमक्षमा निरुपमानन्दाश्रुवारोऽसृजत् ।**
**श्रद्धाभक्तिरचञ्चलाशुफलदेत्युच्चैर्जुघोषेव सा**
**भूरिक्लेशकराः पराश्च नियमा व्यर्थाः कलावत्यपि ॥ ४२ ॥**

**इत्थमिति ।** इत्थं भगवतः श्रीकृष्णस्य माहात्म्यसंभावनैः महत्त्वध्यानधाराभिः चेतसि मनसि सम्प्लुते तन्मयीभावंगते सति विभुं देवं प्रस्तोतुमक्षमा वाचा प्रशंसितुमसमर्था समाधौ वागादीन्द्रियाणां निर्व्यापारत्वात् । निरुपमानन्दाश्रुवारः परमानन्दजनितबाष्पोदकानि असृजन्मुमोच । अनेन लोकप्रत्यक्षेण निजानुभवनिदर्शनेन सा उच्चैर्जुघोषेव उच्चैर्घोषणां कृतवती इव । किमिति अचञ्चला स्थिरा श्रद्धाभक्तिः श्रद्धया समुपेता भक्तिः आशु शीघ्रमेव फलदा अभीष्टं फलं प्रसूते । किं च कलौ युगेऽस्मिन्

भूरिक्लेशकराः तस्य साधनीभूतस्य देहस्य महादुःखदायिनः नियमाः व्रततपोयोगादयः व्यर्थाः निष्फलाः एव मन्तव्याः इति ॥ ४२ ॥

अथ ग्रन्थमुपसंजिहीर्षुः श्रीकृष्णसायुज्यप्राप्तिदिवसे संवृत्तमद्भुतं वृत्तान्तमुपवर्णयितुमाह ।

दीपाराधनमङ्गलोत्सवदिने वृन्दावनेऽलङ्कृते
दिव्यामोदसुपुष्पमाल्यनिचयैर्भक्तप्रवेकैर्युते ।
जन्मारभ्यनिरीक्षितः सुसमयः पुण्यक्रियोपार्जितः
काले तामुपसेदिवान् प्रवयसं देवार्चनान्ते स्वयम् ॥ ४३ ॥

**दीपेति** । दीपाराधनमङ्गलोत्सवदिने दीपैराराधनं पूजा तदेव मङ्गलोत्सवः तस्य दिवसे वृन्दावने स्थले । दिव्यामोदसुपुष्पमाल्यनिचयैः लोकोत्तरपरिमलोद्गारिणां कुसुमानां मालाभिरलंकृते परिभूषिते भक्तप्रवेकैः भक्तश्रेष्ठैर्युते । जन्मारभ्य आजन्मनः निरीक्षितः नितरां काम्यमानः पुण्यक्रियोपार्जितः पुण्यैः कर्मभिः संपादितः सुसमयः । काले पुण्यकर्मणां विपाककाले देवार्चनान्ते देवपूजावसाने प्रवयसं वृद्धां तां स्वयमुपसेदिवान् अतर्कितम् आजगाम । कर्मफलानि पक्वानि स्वयमुपतिष्ठन्ति कर्तारमिति भावः ॥ ४३ ॥

तस्मिन् पुण्यपदे तथा हि हसितस्वाराज्यसम्पन्मदे
गन्धर्वैरुपवीणिता करतलन्यस्ताम्बुजोद्भासिनी ।
शुभ्राङ्गी विबुधेन्द्रसंस्तुतगुणा शीर्षप्रभामण्डला
नृत्यन्ती बत मुक्तभूतलमसौ विष्णोः पदेऽन्तर्दधे ॥ ४४ ॥

**तस्मिन्निति** । तथा हि यथा पूर्वोक्तः सुसमयः स्वयमागतस्तदुच्यत इत्यर्थः । तदेवाह—हसितस्वाराज्यसम्पन्मदे हसितः तिरस्कृतः स्वाराज्यस्य स्वर्गलोकस्य या सम्पद् विभवः तस्या मदः दर्पः येन तस्मिन् । पुण्यपदे पवित्रस्थाने तस्मिन् वृन्दावने असौ मीरा गन्धर्वैः देवगायकैः उपवीणिता समीपे वीणावादनेन सेव्यमाना । करतलन्यस्ताम्बुजोद्भासिनी पाणितलगृहीतेन कमलेन उच्चैः अतीव भासिनी प्रकाशमाना । शुभ्राङ्गी शुभ्रं देदीप्यमानमङ्गं शरीरं यस्याः सा । विबुधेन्द्रसंस्तुतगुणा विबुधैः देवैः इन्द्रेण च अथवा विबुधेन्द्रैः प्राज्ञवर्यैः संस्तुता प्रशस्यमाना गुणा भक्तिमाहात्म्यादिगुणाः यस्याः सा । शीर्षप्रभामण्डला शीर्षे समन्तादुद्भूतायाः प्रभायाः मण्डलं यस्याः सा । मुक्तभूतलं मुक्तं त्यक्तं भुवस्तलं यथा भवति तथा नृत्यन्ती नर्तनं कुर्वाणा विष्णोः पदे आकाशे अन्तर्दधे अदृश्या बभूव । किं च विष्णोः श्रीकृष्णस्य पदेऽन्तर्दधे पदसायुज्यमवाप । बतेत्याश्चर्ये । जीवद्दशायामेव देवभूयप्राप्तिः परमविस्मयकरीति भावः ॥ ४४ ॥

इति सौ० क्षमायाः कृतिषु सव्याख्यायां मीरालहर्यामुत्तरखण्डः समाप्तः ॥

# MIRALAHARI

## FIRST CANTO

1) There was once in the country of Malawa, a beautiful city called Kurkhi. There, the golden dome of the palace shone like the ornament on a woman's bunch of hair, the roads strewn with white fragrant flowers looked like the pearl necklaces of a married woman, the lake with its clear water covered with the pollen of lotuses was reminiscent of a woman's picturesque garment of golden texture.

2) And Mira, descended from the noblest Kshatriya family, bore all the auspicious marks on her body. From her very childhood she showed a most wonderful fascination for the ambrosia of Lord Krishna's name, and sanctified this city by her birth as Girija, the Himalaya, and Sita, the clan of Mithila by their inherent purity.

3) Looking at her with interest, the people of Kurkhi made all sorts of conjectures as follows:

"What is it that shines here? Is it the crescent moon?
"No, the moon has not such a lustre by day."
"Could it be a white lotus creeper? No, it cannot be that, because this kind of lotus blooms only at night."
"Could it be a gold-embossed image? No, for whence such lively movements?"

4) In that town, reigned Mira's father Ratnasingh, the very ocean of wealth. He adhered strictly to the ethics of the Kshatriya race, and always cherished his subjects as his own children by giving them education, means of livelihood and patronage. His greatness was heightened by having this jewel of a daughter.

5) Then, one night as this little girl of five years whose face already bore signs of future greatness, stood at a palace window with her young companions, she saw a procession moving slowly on the high road; it surrounded a golden palanquin amidst a blaze of hand-torches and was accompanied by a band, playing superb instrumental music.

6) In that palanquin were seated a newly wedded bride and a bridegroom smothered with garlands; these two who hardly knew what marriage meant, had not yet passed their adolescence; with their scared tender faces bent down by the advice of their elders, they sat still and silent like a pair of decked dolls.

7) It was the first time that Mira saw such a large crowd. Her eyes wide with astonishment, she said to her mother:

"What's this, mother? Tell me."
"A marriage procession, my child,"
"Where's my husband, mother?"
"He's here in this very house. Look!"

So saying, she pointed to Lord Krishna's image placed in a corner.

8) "Has my marriage taken place, mother?"
"It took place some time ago."
"Was there a large procession with the pomp of music?"
"Of course. There was a great pomp which gladdened all the subjects."
"Was I sitting near my husband?"
"Why, of course, he is by your side now."

9) "Mother, how should I serve my husband?"
"Child, by faith."
"In the manner you serve father?"
"Exactly."
"What will happen if I serve him every day?"
"He will be pleased with you."
"If I never leave my husband, what will happen?"
"He too will never leave you."

10) "How is it possible for an ignorant girl like me to serve her husband well?"
"By a sweet song, dance and a devotional recitation.
"But mother, my voice is hoarse."
"You will soon be taught music."
"But mother, I don't know even a letter."
"Don't worry, child, the very best pandits will give you training."

11) Hearing her mother's speech in detail, meant merely to humour the child, Mira took it seriously as though it were a preceptor's advice, and placed faith in it with all her soul. She lost all interest in what was going on outside and when everyone there was engrossed, she, unnoticed by anyone, went quietly near Lord Krishna's image.

12) A short time elapsed. The royal consort, surrounded by the ladies of the harem came to her daughter and was surprised to see that the little girl's usual mood and manner had completely changed. Her face, brightened with a peculiar lustre, she was standing still as a picture in front of Lord Krishna's image and gazing at it long.

(What happened after some days)

13) Mira's doll which she had mothered, now lay with her dirty face crying in a corner; her hungry parrot was shrieking "Feed me at once, feed me". The cattle which she had always fondled, were now desolate and bellowed dolefully.

14) The bee is distressed to see the lotuses which were once as lovely as Mira's face, now fading away; the female cuckoo mourned the disappearance of Mira's dog which had been trained by her to do many tricks; the deer is grieved at not seeing the parrot which imitated Mira's voice. Wonderful indeed is the bond of affection of living beings for their missing protector.

15) The princess taught by great pandits, specially proficient in Art and Literature, soon excelled great women like Gargi and others in all the lores. In poetic compositions, she surpassed the famous ancient poets. In singing and dexterous dancing, she was equal to celestial damsels.

16) And now the princess, though used to royal comforts, undergoes great hardship. Getting up alertly even before sunrise, she stirs out and going to a quiet pond, plunges into the clean cold water. Then, after the ablution, she returns home, carrying herself a bowl of water for the *puja*.

17) After washing the image of the Lord, who was an ornament of cowherds, she arranges His toilet with great care by sprinkling numerous perfumes and offering Him in

worship golden ornaments, jewels, flower wreaths and other things. Finally, she is completely lost in the stream of nectar-like hymns of Lord Krishna.

18) As time elapsed, that image of the Lord became an object of an unsatiated delight to her eyes; her daily rituals were wonderful. People who came to the king's palace were thrilled and said "Such faith, such intense devotion were never seen before in a child."

( At the end of the worship she prayed as follows: )

19) "My Lord! Protect me, my humble self. Thou art my only shelter. There is none but Thee who can protect me".

Thus praying, she bowed down, and with a thrill looked up at the Lord's image which seemed to smile. This moved her intensely; tears flowed from her eyes and for a moment as though immersed in the ocean of eternal joy, she looked dazzling.

20) Where indeed was the luxury this princess had lived in from her birth and where was a bare floor which was now her bed? Where indeed was her tender body and where such an extraordinary penance of hardship? So great are the impressions of the meritorious acquired in their previous birth which without any training endow them with unflinching faith and devotion.

21) "Could she be Yashodha herself who has come to earth out of motherly love for her child, Lord Krishna? Or could she be Rukhmini eager to be near the king of Yadus that has come? Or could it be Radha, returned to earth to enjoy the *Rasa* dance with Him? Or is it some Gopi standing in front of Gopal to perform a dance?"

22) Thus conjecturing, the astounded people related Mira's extraordinary story to others; very soon it spread in all directions. The rich and the poor alike believing that even a glimpse would sanctify them, became eager to see her as they would the digit of the new moon.

23) Although he had heard about his daughter's great doings, the king did not believe the story. And one day he suddenly went to the harem to see for himself. There, he

